श्री १०८ श्रीराधारमणो जयति।

सप्तमस्कन्धः

महर्षिप्रवरश्रीकृष्णद्वैपायनप्रणीतम्

# श्रीमद्भागवतम्।

श्रीश्रीपादश्रीधरस्वामिकृतभावार्थदीपिका, श्रीराधारमणदासगोस्वामिविरचितदीपिन्याख्यतट्टिप्पनी श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका, श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली, श्रीमद्वल्लभाचार्य्यकृतसुबोधिनी, श्रीगौडीयवैष्णवाचार्य्यप्रवरश्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भाख्यटीका, श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी, श्रीनिम्बार्कसम्प्रदायिश्रीमच्छुकदेवकृतसिद्धान्तप्रदीपाख्यटीका इत्यष्टभिर्व्याख्याभिर्भाषानुवादेनच समलङ्कृतम्।

इदम्

परमहंसपरिव्राजकाचार्य्यश्रीमत्स्वामिप्रकाशानन्दसरस्वतीपूज्यपादशिष्य

**श्रीनित्यस्वरूपब्रह्मचारिणा**

सम्पादितम्;

वङ्गदेशान्तर्गत ताड़ास भूपति श्रीराधाविनोद प्रेम सेवा परायण राजर्षि राय

श्रीवनमालिराय बहादुरस्य

सम्पूर्णसाहाय्येन

प्रकाशितञ्च।

तच

काञ्चीमण्डलान्तर्वर्ति 'कान्दूर' पं० श्रीरङ्गाचार्यद्वारा संशोध्य

श्रीवृन्दावनधामनि

स्वकीये "श्रीदेवकीनन्दन" यन्त्रालये

मुद्रितम्।

सम्वत् १९६१

श्रीलक्ष्मीनृसिंहाय नमः।

# श्रीमद्भागवतम्।

## सप्तमस्कन्धः।

### प्रथमोऽध्यायः।

॥ ॐ नमो भगवते वासुदेवाय ॥

राजोवाच।

समः प्रियः सुहृद्ब्रह्मन् भूतानां भगवान् स्वयम्।
इन्द्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा ॥ १ ॥

नह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः।
नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥ २ ॥

इति नः सुमहाभाग! नारायणगुणान्प्रति।
संशयः सुमहान्जातस्तद्भवाञ्छेत्तुमर्हति ॥ ३ ॥

श्रीशुक उवाच।

साधुपृष्टं महाराज! हरेश्चरितमद्भुतम्।
यद्भागवतमहात्म्यं भगवद्भक्तिवर्धनम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

श्रीगणेशाय नमः॥

स्वभक्तपक्षपातेन तद्विपक्षविदारणम्।
नृसिंहमद्भुतं वन्दे परमानन्दविग्रहम् ॥ १ ॥

ऊतिः पञ्चदशाध्यायैः सप्तमे वर्ण्यतेऽधुना।
ऊतिश्च वासनाप्रोक्ता तत्तत्कर्मानुसारिणी ॥ २ ॥

अशुभा च शुभाचेति द्विधा सा हेतुभेदतः।
अशुभा महतां कोपाच्छुभा महदनुग्रहात् ॥ ३ ॥

हरेर्द्वारपयोर्वैकुण्ठे वसतोरपि।
चतुःसनरुषा विष्णुद्वेषाद्यशुभवासना ॥ ४ ॥

यथा च दैत्यगर्भेऽपि प्रह्लादस्य सतः स्थिरा।
नारदानुग्रहाद्वास विष्णौ सद्भक्तिवासना ॥ ५ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वभक्तंच सदा विष्णुर्द्विषन्तमपि रक्षति ।
तृतीयेऽथभवे ह्यस्यावकरोदात्मसात्पुनः ॥ ६ ॥
अतोमनीषिणा यत्नः कार्योमद्वदनुग्रहे ।
इत्येतदर्थमूतीनामत्र लक्षणमुच्यते ॥ ७ ॥
तत्रादौ दशभिर्दैत्यतत्पुत्रमतिभेदतः ।
महत्कोपानुकम्पोत्थवासनाभेद उच्यते ॥ ८ ॥
सद्वासनाच युज्येत कर्मभिः शुद्धचेतसः ।
परैस्तु पञ्चभिस्तस्मात्क्रियते धर्मनिर्णयः ॥ ९ ॥
तत्रतु प्रथमेऽध्याये हिरण्यकशिपोः सुते ।
विष्णुभक्ते विरोधस्तु विप्रशापजईर्यते ॥ १० ॥

यदुक्तम् पूर्वस्कन्धान्ते "हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना । मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत्" इति । तच्छ्रुत्वा विस्मितः परीक्षित्पृच्छति—समइति त्रिभिः । न हि समस्य सुहृदश्च वैषम्यं नामास्ति नच प्रियस्य प्रीतिकर्तृषु वैषम्यं युक्तमित्यर्थः ॥ १ ॥

किञ्च यस्य यैः प्रयोजनं सिध्यति स तत्पक्षपातीभवति येभ्योबिभेति तान्द्वेषेण हन्ति नतु तदत्रास्तीत्याह—नहीति । निःश्रेयसं परमानन्दएव आत्मा स्वरूपं यस्य असुरेभ्यश्चोद्वेगो भयं नास्ति अतोविद्वेषोपि नास्त्येव. तत्र हेतुः, अगुणस्येति । गुणाधीनौ प्रीतिद्वेषावित्यर्थः ॥ २ ॥

श्रीनारायणस्य गुणाननुग्रहनिग्रहादीन् प्रति तत्त्वं संशयम् ॥३॥

भागवतस्य प्रह्लादस्य माहात्म्यं गीयत इतिसम्बन्धः ॥ ४ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

॥ श्रीमते रामानुजाय नमः ॥

पूर्वस्मिन् स्कन्धे अष्टादशेऽध्याये "हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना" इति विष्णोरिन्द्रस्य पक्षपातित्वमुक्तम् तत्र सर्वान्तरात्मनः सर्वभूतसुहृदो निरतिशयप्रियरूपस्याप्तकामस्य निरस्ताखिलदोषस्य परमकारुणिकस्य श्रीभगवतः कथं प्राकृतवद्वैषम्यनैर्घृण्यादिकम् ? इति पृच्छति राजा—सम इत्यादिना त्रिभिः श्लोकैः । यद्यपि तत्तज्जीवकर्मगुणानुगुण्येनान्तरात्मतया नियन्तुर्न वैषम्यादिदोषप्रसक्तिरिति तत्रतत्र बहुवारमुक्तमिति न शङ्कावकाशः, तथापि तत्रतत्रप्रसङ्गादुक्तमेव तद्दृढयितुं किं गुणानां कर्मणां च प्रत्येकं सुखदुःखादिनिमित्तत्वम् उत समुच्चितानाम्, अथवा कर्मणामेवनिमित्तत्वं, गुणानां तु तद्धेतुत्वमुत गुणानामेव तन्निमित्तत्वं कर्मणां तु गुणोपचयापचयादिनिमित्तत्वमित्यादिशङ्का परिहारान् श्रोतुं च प्रश्नः, सम इति. हे ब्रह्मन् ! भगवान् पूर्णषाड्गुण्यो निरस्तनिखिलदोषश्च अनेनाप्तकामत्वं सूचितम् तत एव स्वप्रयोजननिरपेक्षत्वञ्च समः निरस्तनिखिलदोषत्वादेव द्वेष्यप्रियविभागरहितः स हि रागद्वेषादिमूलकः तदभावात्सम इति भावः । किञ्च सर्वभूतानां देवादीनां चासुरादीनां च सुहृद्धितैषी आत्मत्वादितिभावः

नह्यात्मनः किञ्चिच्छरीरं हितमन्यदहितमात्मत्वादेव च निरतिशयप्रियः एवम्भूतः स्वयं साक्षादेवेन्द्रस्यार्थे प्रयोजनाय कथं दैत्यानवधीद्धतवान्, यथा विषमो रागद्वेषादिप्राकृतगुणयुक्तस्तद्वत् ॥ १ ॥

साक्षान्निःश्रेयसात्मनः पुरुषार्थस्वरूपस्य निरतिशयानन्दरूपस्येत्यर्थः अस्य भगवतः सुरगणैरिन्द्रादिभिर्नह्यर्थः तदनुगृहीतेन्द्रादिभिः साध्यः कश्चित्पुरुषार्थो न तस्यास्ति स्वयमेव साक्षान्निःश्रेयसात्मत्वादिति भावः तथा असुरेभ्य उद्वेगो भयं तेषु विद्वेषश्च नास्त्येव तत्र हेतुं वदन् तं विशिनष्टि, अगुणस्येति. हि यस्मादगुणस्य सत्त्वादिगुणतन्मूलकरागद्वेषभयरहितस्य ॥ २ ॥

इतित्थं हे महाभाग ! निर्गुणस्य श्रीनारायणस्य गुणान्प्रति गुणविषयकोमहान् संशयो जातो वर्तते तद्गुणास्तु समत्वादयश्श्रेष्ठातु, गुणानगुणोत्येतत्संशयात्मकमज्ञानं छेत्तुमपोहितुं भवानेवार्हति नान्य इत्यर्थः ॥ ३ ॥

एवमापृष्टो मुनिस्तावद्राज्ञः प्रश्नमभिनन्दति—साध्विति । हे महाराज ! अद्भुतं प्राकृतचेष्टासजातीयत्वेन चिन्तयितुमशक्यं हरेश्चरितंप्रति साधु पृष्टं हरिचरित्रविषयकसंशयोद्घाटनरूपत्वात्प्रश्नः साधीयानित्यर्थः । साधुत्वमेव प्रश्नस्य स्पष्टयितुं चरित्रं विशिनष्टि—यदिति. यद्धरेश्चरितं भागवतानां माहात्म्यं यस्मिन्तादृशं भस्त्वेवं ततः किं तत्राह, भगवद्भक्तिं वर्द्धयतीति, भगवद्भक्तिवर्द्धनं भगवद्भक्तेर्वर्द्धनं वृद्धिर्यस्मादिति वा भागवतमाहात्म्येन भगवद्भक्तिवर्द्धकेन युक्तत्वाद्भगवच्चरित्रस्य तद्विषयकः प्रश्नः साधुरिति भावः ॥ ४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ श्रीवायुपुत्रायनमः ॥

षष्ठस्कन्धाभिधे तीर्थे स्नातः सप्तमनाम्न्यथ ।
श्रीमद्भागवते स्नातुं प्रयते तत्त्वसाक्षिदे ॥ १ ॥
सेवा येषामपवर्गगतिर्जगताममलास्ते—
श्रीमद्विष्णवङ्घ्रिसरोरुहयुगले भ्रमन्तः ।
सन्तः कुर्वन्तु दयां मयि विजयध्वजतीर्थे—
नित्यानित्याभ्यस्तादितिजाङ्घ्रितनुनखतीर्थसुतीर्थे ॥

सन्ततवेदान्तपरिनिष्ठितानामपि श्रीनारायणपरमप्रसादमन्तरेणानापादितसमीचीनज्ञानामृतकलानां क्वचित्क्वचिदसुरजनमोहाय प्रदर्शितशुक्रशोणितसम्पर्कादिभिरिव भगवतः प्रादुर्भावैस्तत्त्वे संशयालूनां सतां विसंशयार्थं श्रीनृसिंहावतारस्तत्प्रसक्तये नानाविधवर्णाश्रमाचारभेदविचारस्तत्पूजाप्रकारश्च निरूप्यते ऽस्मिन्स्कन्धे. तदर्थं परीक्षित्प्रश्नपूर्वकमुपोद्घातं रचयति—सम इति । यो भगवान् भूतानां योग्यतातिरेकेण पक्षपरिग्रहशून्यः आत्मादेः प्रियश्च "तदेतत्प्रेयः" इति श्रुतेः सत्त्वादिप्रदत्वाच्चानुष्ठितसमर्चनादिसुकृतस्य सुखलक्षणफलदातृत्वेनोपकर्तृत्वाच्च सुहृत् किमत इति तत्राह, स्वयमिति. स स्वयं विषम इवेन्द्रस्यार्थे स्वप्रयोजनमन्तरेण परप्रयोजनार्थं कुर्यन्दैत्यानवधीदित्यन्वयः ॥ १ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, सुरगणैः क्रियमाणस्य स्वप्रयोजनस्य सम्भवादुवधी-न्दिति किं न स्यादिति तत्राह—न हीति । हि शब्दो हेत्वर्थः कुतो नास्तीत्यत्राह—निःश्रेयसात्मन इति, नित्यनिर्दुःखानन्द-स्वरूपस्य तादृशत्वं मुक्तस्याप्यस्तीति तत्राह--साक्षादिति, नित्यनिर्दुःखानन्दानुभवस्वरूपस्य परप्राप्यप्रयोजनाभावान्मुक्तस्य तदभावात्. नन्वसुरप्रद्वेषात्सुरहितं क्रियत इति तत्राह--नैवेति, विद्वेषश्च तत्तत्स्वरूपद्योतनायासुरेभ्य इति पञ्चमी 'वृक्षात्पर्णं पतति' इतिवत्कादाचित्कत्वाभावान्नित्ये द्वेषे वधानुपपत्तिरन्यथा वध-स्यापि सन्ततानुवृत्तिः स्यादतो नोपपत्तिः स्यादिति भावः स्वाभिभवलक्षणभयात्तद्वध इति तत्राह—नेति, उद्वेगो भयलक्षणं कुत इत्यत उक्तम् अगुणस्येति "प्राकृतगुणासम्बद्धस्य तादृक्-स्वभावत्वाद्धरेस्तदभावान्निर्गुणश्च" इतिश्रुतेः अनेन निःश्रेयसात्म-नोपि गुणसम्बन्धेन जीववत्तथात्वं स्यादिति शङ्कापि निरस्तेति ज्ञायते ॥ २ ॥ ३ ॥

प्रामाणिकत्वद्योतनाय प्रश्नं स्तौति—साध्वीति । तत्र हरिचरिते भागवतानां माहात्म्यं भगवद्भक्तिवर्द्धनमित्यनेन तन्माहात्म्यं भगव-न्माहात्म्याविनाभूतमित्यवगन्तव्यम् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ श्रीश्रीकृष्णोजयति ॥

अथ सप्तमस्कन्धस्यक्रमसन्दर्भः ।

सप्तमक्रमसन्दर्भे सन्दर्भाणां समाहृतिः ।
क्रियते यन्निदेशेन स मे ऽनन्यगतेर्गतिः ॥

परमात्मत्वेन समः सुहृद्धितकारी प्रियः प्रीतिविषयो भग-वान् एवं सति साम्येनैवोपकर्तव्यत्वेन प्रीतिविषयत्वेन च सर्वे-ष्वेवप्राप्तेषु कथं विषमइव दैत्यानवधीत् विषमत्वमुपलक्षणम् । असुहृदिवाप्रिय इव चेति ॥ १ ॥ २ ॥ ३ ॥

साधु पृष्टमिति सार्द्धमेवान्वितम् । हे महाराज ! इदं यत् पृष्टं तत् साधु सुविचारितमेव. किन्तु हरेश्चरितमद्भुतमपूर्वम् अवै-षम्येपि विषमतया प्रतीयमानत्वेन विचारातीतत्वात्. यत् यत्र हरेश्चरितं भगवद्भक्तिवर्द्धनं भागवतमाहात्म्यं भागवतानां श्रीप्र-ह्लादोपलक्षितभक्तवृन्दानां माहात्म्यं वर्ण्यते । अनेन भागवतार्थ--मेव सर्वं करोति भगवान् नत्वन्यार्थमित्यस्यैवार्थस्य पर्यवसा-नं भविष्यतीति व्यञ्जितं । टीकाच स्वभक्तपक्षपातेनेत्यादिना । अतः गीयतइति । परमं पुण्यं यथास्यात्तथा या गीयते तां कथामिति यत्तदोरध्याहारेणान्वयः । अत्र च तैर्गीयमानत्वेन भक्तैकसुखप्रयो-जनत्वमेव व्यञ्जितम् ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

॥ श्रीकृष्णाय नमः ॥

प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम् ।
लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥
गोपरामाजनप्राणप्रेयसेतिप्रभूष्णवे ।
तदीयप्रियदास्याय मां मदीयमहं ददे ॥
ऊतिः स्याद्वासना सात्र सप्तमे कथ्यते द्विधा ।
अशुभाच शुभाचापि कोपतोऽनुग्रहात् सताम् ॥
सन्तश्च त्रिविधाः शुद्धभक्ता ज्ञानादिमिश्रिताम् ।
भक्तिदधानास्तन्मिश्रज्ञानवन्तश्च कीर्त्तिताः ॥
हिरण्यकशिपोः स्वाभाविकीया वासनाऽशुभा ।
तत्र हेतुः सनन्दादिकोपः प्राचीनएव सः ॥
तस्यापि पुत्रो यस्तस्य प्रह्लादस्य शुभोत्तमा ।
शुद्धभक्तौ वासना श्रीनारदाङ्घ्रिकृपाभरात् ॥
तत् संरक्ष्य सतामागः कुञ्जरात् तत्प्रसादजा ।
दीनता मानदत्वादि शिखाक्लृप्तमहाकृतिः ॥
भक्तिवल्ली नृभिः पाल्या श्रवणाद्यम्बुसेचनैः ।
एवं कथादशाध्यायां भक्तेः कैवल्यमीक्षयेत् ॥
पञ्चाध्यायां कथाभक्तेः प्राधान्यं गुणभूतताम् ।
तादृग्भक्तगुरोर्लभ्यं दर्शयेत्तादृगास्पदे ॥
स्युस्त्रिषु क्रमतः प्रेमशान्तभक्तत्वमुक्तता ।
एवं पञ्चदशाध्यायस्सप्तमः साधु सेव्यते ॥
तत्रतु प्रथमे विष्णोर्वैषम्यं वारयन्मुनिः ।
तस्य पार्षदयोराह सङ्क्षेपात्त्रिजनोः कथाम् ॥

पूर्वस्कन्धान्ते "हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना । मन्युना शोकदीप्तेन ज्वलन्ती पर्यचिन्तयत्" इतीन्द्रपक्षपातलक्षणं विष्णोर्वैषम्यमसहमान इव स्वयमवगतसिद्धान्तोऽपि महामुनेस्तस्य मुखादपि समाधानामृतमास्वादयितुमाह--समइतित्रिभिः । समस्य कथं वैषम्यं ! प्रियस्य कथमसुरेषु प्रीत्यभावः ? सुहृदश्च कथं तेष्व-सौहार्दम् ? ॥ १ ॥

न चेन्द्रादिभिस्तस्य सुखं सिद्ध्यतीत्यतस्तत्पक्षपात इतिवाच्य-मित्याह--नेति । निःश्रेयसं परमानन्दएव आत्मा स्वरूपं यस्य तस्य नहिसुखस्वरूपस्य कश्चिदन्यः सुखंसाधयेदितिभावः । न चासुरादि-भिरुद्वेजकैस्तस्य दुःखं भवेद्यतस्तेषु विद्वेष इत्याह, नैवेति. असुरेभ्य उद्वेगो नास्त्यतो न विद्वेषस्तत्र हेतुः अगुणस्येति ॥ २ ॥

गुणान् अनुग्रहनिग्रहादीन्प्रति ॥ ३ ॥

यद्यतः प्रश्नात् हरेश्चरितं तदुत्तरत्वेनावश्य वाच्यं गीयते ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

॥ श्रीकृष्णाय नमः ॥

श्रीकृष्णं नियमानन्दं प्रणम्येह सुखप्रदः ।
सिद्धान्तद्योतको दीपः सप्तमेऽथ विरच्यते ॥
विविधावासनास्त्वत्र कामद्वेषादिकारिताः ।
कृष्णे कृष्णप्रदाः प्रोक्ता अन्येष्वन्यप्रदास्तथा ॥
हरेर्ज्ञानं च भक्तिश्च तथा वर्णाश्रमक्रिया ।
अन्तःकरणशुद्ध्यर्थं वर्ण्यते परमादरात् ॥

अतिक्रान्तस्कन्धस्याष्टादशाध्याये "हतपुत्रा दितिः शक्रपार्ष्णि-ग्राहेण विष्णुना । मन्युना शोकदीप्तेन ज्वलती पर्यचिन्तयत्" इति विष्णोरिन्द्रपक्षपातित्वं श्रुत्वा पृच्छति-सम इति त्रिभिः ॥ १ ॥

गीयते परमं पुण्यमृषिभिर्नारदादिभिः।
नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम्॥ ५॥
(१) (जिह्वां लब्ध्वापि यो विष्णुं कीर्त्तनीयं न कीर्त्तयेत्।
लब्ध्वापि मोक्षनिश्रेणीं स नारोहति दुर्मतिः॥ ०॥
तस्माद्गोविन्दमाहात्म्यमानन्दरससुन्दरम्।
शृणुयात्कीर्त्तयेन्नित्यं स कृतार्थो न संशयः॥ ०॥
तस्मादिमां कथां पुण्यां गोविन्दचरणाश्रिताम्।
महापुण्यप्रदां यस्माच्छृणुष्व नृपसत्तम!॥ ०॥)
निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः।
स्वमायागुणमाविश्य बाध्यबाधकतां गतः॥ ६॥
सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः।
न तेषां युगपद्राजन्! ह्रास (२) उल्लास एव वा॥ ७॥
जयकाले तु सत्त्वस्य देवर्षीन् रजसोऽसुरान्।
तमसोयक्षरक्षांसि तत्कालानुगुणोऽभजत्।
ज्योतिरादिरिवाभाति सङ्घातान्न विविच्यते॥ ८॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अगुणस्य उद्वेगादिकारिणीभूततमोरज आदिगुणरहितस्य॥२॥
नारायणस्य गुणान् निग्रहानुग्रहरूपान् प्रति सुमहान् संशयो जातस्तं भवान् छेत्तुमर्हति॥ ३॥
एवमापृष्टोमुनिः राजप्रश्नाभिनन्दनपूर्वकम् नहि भगवति वैषम्यादिदोषगन्धघातस्पर्शोऽपि प्रकृतिगुणविमोहितजीवकर्मानुरूपं निग्रहादिकं जीवोपकारार्थं स्वकृतधर्मसेतुरक्षार्थं सर्वकर्त्ता सर्वनियन्ता सर्वात्मा सर्वेश्वरोभगवान् करोतीत्युत्तरमाह-साधु-पृष्टमिति सार्द्धैरष्टभिः श्लोकैः। अद्भुतं सर्वपुरुषार्थप्रदत्वेनाश्चर्यभूतं हरेश्चरितं मां प्रति त्वया साधु पृष्टम्. यद्धरेश्चरितं भागवतमहात्म्यं भागवतानां माहात्म्यं यस्मिन् तथाभूतं भगवद्भक्तिं वर्द्धयतीति तथा॥ ४॥

---

भाषाटीका।

॥ श्रीरुक्मिणी रमणो जयति॥
॥ श्रीकालीयफणामाणिक्यरञ्जितश्रीपदाम्बुजाय नमः॥
नत्वा श्रीरुक्मिणीकान्तं ध्यात्वा रामानुजं हृदि॥
वृन्दावनोद्भवान् गुल्मलतावृक्षान् प्रणम्य च॥ १॥
सप्तमस्कन्धभावार्थबोधिनी भक्तसम्मता॥

भाषा भागवतार्येण क्रियते साभिवर्द्धताम्॥ २॥

राजोवाच॥

हे ब्रह्मन्! भगवान् स्वयं प्राणियों का सम और प्रिय है। फिर इन्द्र के लिये विषम के तरह दैत्यों को क्यों मारा?॥ १॥

साक्षात् परमानन्द स्वरूप इस भगवान का देवताओं से कुछ प्रयोजन नहीं तथा असुर लोगों से कुछ द्वेष नहीं तथा प्राकृत गुण शून्य के कुछ उद्वेग नहीं॥ २॥

हे महा भाग! इस प्रकार श्री नारायण के निग्रह अनुग्रहादि रूप गुणों का मुझ को बड़ा संशय उत्पन्न हुआ है इस संशय के छेदन करने को आपही योग्य हैं॥ ३॥

श्रीशुक उवाच॥

हे बड भागी हे राजन्! आपने हरिका अद्भुत चरित्र भला पूंछा। क्योंकि जिसमें भगवद्भक्ति के बढाने वाला भागवत (भक्त) का माहात्म्य है॥ ४॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

कृष्णाय व्यासाय कृष्णं मुनिं नत्वेत्यर्थः॥ ५॥

(१) व्याख्यानमन्तरा एते श्लोकाः अधिकाः दृश्यन्ते—श्रीप० (क) पुस्तके। (२) उभाहू इतिपाठान्तरम्. विजय०

श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्मात्प्रकृतेः परः अतो निर्गुणः अतएवाजः अतएवाऽव्यक्तोरागद्वेषादिनिमित्तभूतदेहेन्द्रियादिरहितः सोऽपि स्वमायागुणां सत्त्वादिकमाविश्याधिष्ठाय बाध्यान्प्रति यद्वा देवासुराणां परस्परं या बाध्यबाधकता तां गतः प्राप्तः तत्र हेतुर्जात इत्यर्थः ॥ ६ ॥

तत्र गुणानां स्वीयत्वे सति प्राकृतपुरुषवद्विषमः स्यात्तत्तु नास्तीत्याह—सत्त्वमिति । ननु, स्वेच्छया गुणाधिष्ठानेनापि पक्षपातवैषम्यं स्यादेव. न तस्य कालकृतत्वादित्याह—न तेषामिति सार्द्धेन । उल्लासो वृद्धिः ॥ ७ ॥

सत्त्वस्य जयकाले देवादीनृषींश्चाभजत् तत्तद्देहं प्रविश्य वर्धयतीत्यर्थः रजसोजयकाले यक्षरक्षांसि तस्य कालस्यानुगुणस्सन् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतस्तत्परमं पुण्यमतीवपुण्यतमं चरित्रं नारदादिभिः ऋषिभिर्गीयते यतस्त्वत्प्रश्नः साधुस्ततोऽहं कृष्णाय व्यासाय मुनये नत्वा हरेः कथां कथयिष्ये हरिगुणाविषयकसंशयरूपत्वात्प्रश्नस्य तद्गुणवर्णनरूपकथाकथनेनैवोत्तरयामीत्यभिप्रायेण कथां कथयिष्ये इत्युक्तम् ॥ ५ ॥

एवं कथाकथनं प्रतिज्ञायाथ सत्त्वादिगुणोद्भवाभिभवाधिना देवादीनां जयपराजयौ सत्त्वादिगुणाश्च तत्तज्जीवकर्माधीनोद्भवाभिभववन्तः प्रसिद्धाः "कर्मवश्या गुणाह्येते सत्त्वाद्याः पृथिवीपते" इत्यादिभिः, अतः सत्त्वान्तरात्मतया अवस्थाय तत्तज्जीवकर्मानुगुणं गुणान्प्रेरयतः ईश्वरस्य न वैषम्यादिकमिति परिहरति—निर्गुणोऽपीति । निर्गुणः हेयगुणरहितः रागद्वेषादिरहित इत्यर्थः अव्यक्तः प्रमाणान्तराणामगोचरः अनेन प्रत्यक्षादिप्रमाणगोचररागद्वेषादिहेयगुणयुक्तप्राकृतवैलक्षण्यमुक्तम, अत एव ह्यजः कर्मायत्तोत्पत्त्यादिरहितः भगवान्पूर्णषाड्गुण्यः प्रकृतेः परः "भूमिरापोऽनलोवायुः" "अपरेयमितस्त्वन्याम्" इत्युक्ताचिदचिदात्मकप्रकृतिद्वयाद्विलक्षणः अपिशब्देनैवंविधस्य वैषम्याद्यनर्हता सूच्यते. यद्यप्येवंविधः तथापि स्वमायागुणामाविश्य स्वांशभूतां गुणविशिष्टां प्रकृतिमाविश्येत्यर्थः, आवेशश्चात्र प्रेरणपर्यन्तः "अन्तः प्रविष्टः शास्ता जनानाम्" इति श्रुतेः । ईरयतीति वक्ष्यमाणत्वाच्च बाध्यबाधकतां गतः बाध्यबाधकदेवासुरवर्गयोरन्तरात्मतया तत्तच्छरीरकत्वेनावस्थित इत्यर्थः गुणकर्मानुगुणप्रेर्यमाणशरीरभूतदेवासुरवर्गगतो बाध्यबाधकभावः, न प्रकृतिद्वयविलक्षणतदात्मभूतपरमात्मगतः । यथा, देहादिगतावस्थाः नात्मगतास्तथेति भावः ॥ ६ ॥

एतदेव प्रपञ्चयितुं तावद्गुणानां प्रकृतेरेव सम्बन्धित्वं तेषां तत्तज्जीवकर्मानुसारेण परिणामस्वभावत्वञ्चाह-सत्त्वमिति । सत्त्वादयः प्रकृतेरेव गुणाः, न त्वात्मनः; परमात्मनः परमात्मशरीरभूतप्रकृतिस्वरूपगताः न तु परमात्मस्वरूपगता इत्यर्थः तेषां



सत्त्वादीनां सर्वेषां ह्रासोऽभिभवः उल्लास उद्भवश्च युगपन्न भवति किन्तु तत्तत्कर्मपरिपाककालानुगुणं कदाचित्कस्यचिद्ध्रासः कदाचिदुल्लासश्च भवतीत्यर्थः ॥ ७ ॥

ततः कथं वैषम्यपरिहारः ? इत्यत आह--जयकालेष्विति । सत्त्वस्य जयकाले उत्कर्षकाले कर्मायत्तसत्त्वगुणोपचयकाले इत्यर्थः देवानृषींश्चाभजत्तदनुग्राहको भवति रजसो जयकाले इत्यनुषङ्गः असुरानभजत् तमसोजयकाले तु यक्षान् रक्षांसि च तत्कालानुगुणस्तत्तत्कर्मविपाककालानुगुणोऽभजत्. अयं भावः—

> "गुणप्रवाहपतितो भूतवर्गोऽपि यात्ययम् ।
> कर्मवश्या गुणाह्येते सत्त्वाद्याः पृथिवीपते ॥"

इति भगवत्पराशरवचनात्. सत्त्वादिगुणानां तत्तज्जीवकर्मविपाककालानुगुणह्रासोल्लासरूपपरिणामप्राचुर्यञ्च प्रसिद्धम् "आत्यन्तिकेन सत्त्वेन दिवं देवाः प्रपेदिरे । धरां रजः स्वभावेन" इत्याद्युक्तरीत्या देवादीनां स्वस्वकर्मायत्तसत्त्वादिगुणप्राचुर्यञ्च प्रसिद्धम्. सत्त्वादिगुणानामुल्लासः सुखदुःखमोहाद्यापादक इति भगवता गीतम्—

> "ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ।
> लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ॥
> रजस्येतानि जायन्ते विवृद्धे कुरुनन्दन ।
> अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥
> तमस्येतानि जायन्ते विवृद्धे पुरुषर्षभ !" ॥ इति

ईश्वरस्य तु सर्वान्तरात्मत्वं बहुप्रमाणप्रतिपन्नम् एवं सत्येतदुक्तं भवति. सर्वान्तरात्मतयावस्थित ईश्वरः सर्वदा कस्यचिदेव विजयं कस्यचित्सर्वदा पराजयं च न प्रतिदिशति. अपि तु तत्तद्देवादिकर्मपरिपाककालानुगुणसत्त्वादिगुणोद्भवकालेषु देवादीनां विजयं प्रतिदिशति अन्येषां तु पराजयं.सत्त्वादिगुणोद्भवाभिभवयोश्च कर्माधीनत्वात्तदनुरूपप्रवृत्तेरीश्वरस्य न वैषम्यमिति. ननु, कर्मपरिपाककालानुगुणोल्लाससुखकरसत्त्वोपचयदशायां तद्गुणप्रचुराणां देवादीनां जयमावहतीति युक्तम्. इदन्त्वयुक्तं, रजस्तमसोरुपचयदशायामसुरक्षआदीन्भजत इति । तदुपचयस्य दुःखमोहादिफलकत्वेन पराजयाद्यावहत्वादुच्यते रजस्तमसोरुल्लासकालेऽसुरादीन् भजतीत्यस्य तेषां जयमावहतीत्यर्थः अपि तु रजस्तमसोरुल्लासफलभूतदुःखमोहादिनिमित्तपराजयादिकमावहतीत्येवञ्च यद्देवासुरादीनामपि स्वकर्मविशेषपरिपाकानुगुणं सत्त्वोल्लासस्तदा जयं प्रदिशत्यन्यथा तु पराजयम्. एवं देवादीनामपि कर्मविशेषपरिपाकानुगुणसत्त्वोद्रेकदशायां जयं, तेषामेव पुनः कर्मविशेषपरिपाकानुगुणरजस्तमसोरुल्लासे सति दुःखादिकरं पराजयादिकमिति. इयांस्तु विशेषः, देवादीनां पुण्यकर्मणां सत्त्वप्रचुरत्वात्प्रायशः तस्यैवोल्लासात्प्रायशो विजयः, कादाचित्कः पराजयः; असुरादीनां त्वपुण्येन रजस्तमःप्रचुरत्वात्तयोरेव प्रायश उल्लासात्प्रायशः पराजयः कादाचित्को विजय इति ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रश्नप्रतिवचनं भगवदनुग्रहमन्तरेण सुवचं न स्यादिति प्रकटनाय भगवन्तं प्रसाद्य वक्तव्यार्थं प्रतिजानीते नत्वेति ॥ ५ ॥

हरेर्हन्तृत्वधर्मो न घटत इति वदन् लोकेष्वेकत्वादुत तद्विलक्षणत्वादिति वावदीषि समत्वादिधर्मोपन्यासानुपपत्तेर्न प्रथमः अघटितघटकशक्तिमत्त्वेन सर्वस्योपपत्तेर्द्वितीयो युक्त एवेति भावेनाह—निर्गुण इति. अयं भावः । भगवान् स्वमायागुणं स्वेच्छागुणमनुसृत्य स्वाधीनप्रकृतिगुणनिर्मितदेवासुरदेहं वाविश्य तत्र स्थित्वा बहिश्च नृसिंहादिप्रादुर्भावरूपेणासुरादिबाधकतामसुरादिबाध्यवस्तुषु नियामकत्वेन स्थित्वा बाध्यतां गतो भवति किमत्र मानमितीयं शङ्का बाध्यादिस्थो हरिर्नित्यं बाध्यतादिगतेत्यपि गीयते । ननु, बाध्यत्वाद्यदोषयुतत्वत इति भविष्यत्पर्ववचनेन परिहर्तव्येति, हिशब्देन "लोकवत्तु लीलाकैवल्यम्" इति सूत्रोक्तिं प्रयोजयति निर्गुणत्वादिकं वैलक्षण्ये लिंगमिति ज्ञापनाय प्रयुक्तं पुरुषाणां गुणदोषानुसारेण रक्षाद्यभावेन समत्वादिकमपि न युज्यत इति प्रदर्शनायापिशब्दः तर्हि कुतोविविच्य न ज्ञायत इत्यतोऽव्यक्त इति—

"दधिस्थघृतवत्काष्ठे वह्निवच्च जनार्दनः ।
देहेंद्रियासु जीवेभ्यो विविच्य ज्ञायते नतु ॥

इति । अतो विविच्या ज्ञानं युक्तम् ॥ ६ ॥

स्वमायागुणमाविश्येत्युक्तं विवृणोति—सत्त्वमित्यादिना । प्रकृतेः स्वरूपभूता आत्मनः परमात्मनो ज्ञानादिवन्न स्वरूपभूताः किंत्वधीनाः जीवस्याप्यभिमानादेव गुणानां भिन्नस्वभावत्वाद्युगपत्प्रवृत्त्यनुपपत्तेरित्यतः शक्तिप्रकटनप्रकारं दर्शयति नतेषामिति—ह्रासोऽनुद्भूतत्वमुत्साहउद्भूतत्वं चयवृद्धिक्रमेणेति परिहारः ॥ ७ ॥

तं क्रमं विविनक्ति—जयेति । सत्त्वस्य जयकाले उत्साहविषये देवर्षीन् भजन्नानाभातीत्यन्वयः रजसउत्साहविषये असुरान्वर्द्धयन् तमस उत्साहविषये यक्षादीन्वर्द्धयन्नेवं गुणानां शक्तिं जृम्भयतीत्यर्थः । तत्रापीत्थं भावोस्तीत्याह—तत्कालेति, तत्तत्कालगुणमनुसृत्य वर्तमानः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नत्वेत्यर्द्धकम् ॥ ५ ॥

तत्र तावद्व्यञ्जितार्थानुरूपमेव प्रश्नोत्तरमाह—निर्गुणोऽपीति ।

निर्गुणः प्राकृतगुणरहितः अत एवाजो नित्यसिद्धः अत एव चाव्यक्तः । प्राकृतदेहेन्द्रियादिरहितत्वात्सामान्येन व्यज्यत इति स्वयप्रकाशदेहादिरित्यर्थः । ततश्च प्रकृतिगुणेषु रागद्वेषादिरहितश्चेति भावः । एवमेवम्भूतोऽपि स्वेषु भक्तेषु या माया कृपा तत्रोत्थितो यो गुणो लीलाकौतुकमयविशुद्धोऽर्जितसत्त्वाख्यस्तमाविश्य आलम्ब्य भगवान् नित्यमेव प्रकाशितषड्गुणैश्वर्यस्सन् एतद्व्युपलक्षणं कदाचिददित्यादौ जातः सल्लोकेन्द्रियेषु व्यक्तोऽपि सन् बाध्यबाधकतां गतः, कदाचिदसुरैर्बाध्यतां पराजयं कदाचित्तु तेषां बाधकतां जयं प्राप्त इत्यर्थः । अत्र सत्यप्यर्थान्तरे भागवतानुग्रहप्रयोजनत्वेनोपक्रान्तत्वादुपसंहरिष्यमाणत्वाद्गतिसामान्याच्छलमयमायया तत्कर्तृत्वेऽप्यधिकदोषपाताच्च तन्नापेक्ष्यते. तस्माद्भक्तविनोदैकप्रयोजनकस्वैरलीलाकैवल्येनान्यत्र रागद्वेषाभावान्नात्र वैषम्यमिति भावः । अत एव बाध्यतामपि यातीति बाधकतया सहैवोक्तम्, तथा निजस्वरूपशक्तिविलासलक्षणलीलाविष्कारेण सर्वेषामेव हितं पर्यवस्यतीति सुहृत्त्वादिकञ्च नापयातीति ध्वनितम् ॥ ६

अथ तस्य बाध्यबाधकताव्यवस्थां स्थापयति द्वाभ्याम्—तत्र ये तु सत्त्वादयो गुणास्तेषु न तदीयत्वं न तदावेशो न च तदेकावस्थात्वं, यतः पूर्वत्र पद्ये तस्य गुणस्यान्यतमत्वदर्शनाय स्वेति आविश्येति च विशिष्य स्वमायागुणमाविश्येत्युक्तम्. न तु मायागुणमुपधायेत्याह—सत्त्वमित्यर्द्धकेन; सत्त्वादयो गुणाः प्रकृतेरेव नात्मनः परमेश्वरस्य तु ये सर्वेऽपि नित्यमेवोल्लासिनो गुणास्ते तु ते न भवन्तीत्यर्थः । तदुक्तम्

"सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ।
स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु इति ॥
ह्लादिनी सन्धिनी सम्वित्त्वय्येका सर्वसंस्थितौ ।
ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते" ॥

इत्यादिवचनानि भगवत्सन्दर्भे दर्शितानि न तेषामिति सार्द्धकम् । यस्मान्नात्मनस्ते तस्मादेव युगपद्ध्रास एव उल्लास एव वा नास्ति । किन्तु विकारित्वेन परस्परमुपमर्द्योपमर्दकत्वात् कस्यचित् कदाचिद्ध्रासः कस्यचित् कदाचिदुल्लासो भवतीत्यर्थः । ततश्च देवादीनां तत्साहाय्ये असुरादीनां तद्युद्धे योग्यतां दर्शयति तथा सत्त्वाद्युल्लासकाले तल्लीलायास्तदधीनत्वमेव यत् प्रतीयते न तदनुवदन् परिहरति सत्त्वस्य जयकाले देवादीनृषींश्चाभजत् भजति भगवांस्तत्तद्देहेषु सत्त्वोपाधिकं निजं तेजः सञ्चारयति येन च तान् सहायमानान् करोतीत्यर्थः । एवं रजसो जयकाले असुरेषु रज उपाधिकं तमसो जयकाले यक्षरक्षस्सु तमउपाधिकमिति योजनीयम् । ततश्च येन तान् यक्षादीन् प्रतियोद्धॄन् भगवान् कुर्वन् देवादीन् पराजितान् करोति स्वमपि तथा दर्शयतीत्यर्थः । तदेवं भक्तरसपोषकलीलावैचित्र्याय बाध्यबाधकतां यातीति दर्शितं यच्च क्षीरोदमथने श्रूयते, । "तथासुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् ॥ उद्दीपयन् देवगणांश्च विष्णुर्दैवेन नागेन्द्रमबोधरूपः" इति । अत्रापि तद्वैचित्र्यार्थमेव तथा तत्तदावेशस्तस्येति लभ्येत नन्वायाता तस्य तत्तद्गुणोद्बोधककालपारवश्येन स्वैरलीलाहानिः । ततश्च गुणसम्बन्धातिशये वैषम्यादिकञ्च स्पष्टमेवेत्याशङ्क्याह—तत्कलानुगुण इति । तेषां सत्त्वादीनां काल एवानुगुणो यस्य सः भगवच्चरण इतिवत्. समासः स्वैरमेव क्रीडति तस्मिन् नित्यमेव तदनुगतिकया मायया यया तदनुसारेणैवानादिसिद्धप्रवाहं तं तं जगत्कर्मसमुदायं प्रेर्य, स्ववृत्तिविशेषरूपत्वेन प्रवर्त्यमानः सत्त्वादिगुणानां काल एव तदधीनो भवतीत्यर्थः । कालस्य मायावृत्तित्वमुदाहृतं कालो दैवमित्यादौ त्वन्माययैवेति । यद्वा तेषां कालोऽपि सदानुगतो भक्तानुग्रहमात्रार्थस्वैरचेष्टात्मकप्रभावलक्षणो गुणो यस्य स इत्यर्थः । ततोऽपि तच्चेष्टानुसारेणैव मायया तत्तत्प्रवर्तनमिति भावः । तदु-

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

क्रम ।"योऽयं कालस्तस्य ते व्यक्तबन्धोश्चेष्टामाहुश्चेष्टते येन विश्वम्" इति । तथा चोभयथापि न पारवश्यमित्यायातम्. इत्थमेव श्रीकपिलदेवेनापि "यः कालः पञ्चविंशकः" इति ।"प्रभावं पौरुषं प्राहुः कालमेके यतो भयम्" इति च तत्र मायाव्यञ्जकत्वपुरुषगुणत्वलक्षणमतद्वयमुपन्यस्तवान् । अत्र चास्य चेष्टा प्रभावश्च भक्तिविनोदायैव मुख्यावृत्तिः गुणोद्बोधादिकार्यन्तु तत्र स्वत एव भवतीति तच्च प्रवृत्त्याभास एव ततश्च पूर्वांशः स्वयमेवेति स्वरूपशक्तेरेव विलासः । परस्तु तदाभासरूप एवेत्याभासशक्तेर्मायाया एवान्तर्गतः । योऽयं काल इत्यादौ निमेषादिरित्युक्तिस्तु द्वयोरभेदविवक्षयैवेति ज्ञेयम् । अत एवं व्याख्येयं यथा भृत्यस्यानुगतो भृत्यः अनुभृत्यः तथा तत्र तत्प्रभावलक्षणस्य गुणस्याऽनुगत आभासरूपो गुणः अनुगुणः तथा च तेषां कालोऽपि अनुगुणो न तु साक्षाद्गुणोऽपि यस्येति ॥ ७ ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कृष्णाय व्यासाय ॥ ५ ॥

स्वमायागुणं सत्त्वादिं प्रविश्य अधिष्ठाय बाध्यत्वं बाधकत्वञ्च गतः प्राप्तः गुणानां परस्परबाध्यत्वबाधकत्वलक्षणं वैषम्यगुणाधिष्ठातरि भगवत्यारोपितमित्यर्थः ॥ ६ ॥

स्वरूपतस्तु भगवान् सर्वत्र सम एवेत्याह-सत्त्वमिति । प्रकृतेरेव गुणा न त्वात्मनो भगवतः प्रकृतेःस्वशक्तित्वेऽपि स्वरूपभूतत्वाभावादिति भावः तस्मात् सर्वत्र दृश्यमानं भगवतो वैषम्यं गुणवैषम्यमूलकमेव तच्च गुणवैषम्यं गुणानां ह्रासाधिक्यरूपं तच्च ह्रासाधिक्यं न यौगपद्येन भवति किन्तु क्रमेणैवेत्याह--न तेषामिति । ह्रासो बाध्यत्वहेतुः उल्लास आधिक्यं बाधकत्वहेतुः । तेच सत्त्वादीनां ह्रासाधिक्ये तदुपलक्षणानां देवासुररक्षसां ह्रासाधिक्याऽभ्यामनुमेये ॥ ७ ॥

तत्र गुणानांस्वतो जाड्यादेव ह्रासाधिक्ययोरण्यकिञ्चित्करत्वाभावात् तत्राधिष्ठातृत्वेन भगवत्प्रवेशमाह–जयेति । सत्त्वस्य जयकाले आधिक्यसमये देवानृषींश्च अभजत । तदा सत्त्वं यथा आधिक्यमधुस्तथा तत्राधिष्ठानमपि तस्याधिक्यमभूदिति स तत्तद्देहं प्रविश्य तत्तद्बलमधिकयन् असुरराक्षसादीन् बाधत इत्यर्थः । एवं रजसो जयकाले असुरान् तमसो जयकाले यक्षरक्षांसि तस्य कालस्य अनुगुणः अनुरूपः सन्निति गुणाधिक्यस्यापि कारणं काल एव न तु स इत्यर्थः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नारदादिभिर्गीयते यत् परमम् पुण्यम् यतोहरेश्चरितम् अलि पृष्ठः कुतोऽतस्तत्प्रत्युत्तरदानार्थं हरेः कथां कथयिष्ये कृष्णाय मुनये कृष्णद्वैपायनं तत्त्वावगन्तारं तथा ॥ ५ ॥

निर्गुणः प्राकृतगुणानिबन्धनकर्मतज्जन्यदेहादिरहितः अत एवाऽजः प्राकृतगुणाहेतुकजन्मरहितः अतएव अव्यक्तः व्यक्ताच्चिद्चिदात्मकं विश्वं तद्भिन्नः सर्वदोषास्पृष्ट इत्यर्थः भगवान् स्वाभाविकैश्वर्यादिषड्गुणयुक्तः प्रकृतोरिति पदं सामान्यतया परापरशब्दवाच्यप्रकृतिद्वयपरम् ।

"भूमिरापोनलोवायुः खं मनोबुद्धिरेवच ।
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्" ॥

इति प्रकृतिद्वयात्परस्तदाश्रय इत्यर्थः अत एव स्वमायागुणं स्वमायागुणपरिणामं जीवविशिष्टं देहेन्द्रियसंघातमाविश्य अन्तर्यामितया प्रविश्य बाध्यबाधकतां जीवानां देवासुरादीनां परस्परं या कर्मयोगाद्बाध्यबाधकता तां हेतुतया गतोभवति तत्तत्कर्मानुसारेण तां तां बाधकतां च देहिभ्यो ददाति स्वयं तु समएवेत्यर्थः ॥ ६ ॥

स्वमायागुणमाविश्येत्युक्त्या शक्तिगुणाः कार्यकारणरूपाः शक्तिमन्तं सर्वात्मानं न विमोहयन्ति तदात्मकत्वात् जीवात्मानं तु ह्रासवृद्ध्यादिरूपैर्विमोहयित्वा शुभाशुभानि कर्माणि तेन कारयन्ति अतदात्मकत्वादित्याह सत्त्वमित्यादिना सत्त्वंरजस्तमइति गुणाः प्रकृतेः भगवच्छक्तेः, अतोभगवति न प्रभावं कुर्वंतीतिभावः आत्मनोजीवस्य तु न तदात्मका न भवन्ति तस्य सर्वात्मत्वाभावात् अतस्ते न साधु असाधु च कर्म कारयन्तीतिभावः गुणास्ततज्जीवकर्मपरिपाककालानुसारेण विषमाभवन्ति न तु युगपदित्याह न तेषामिति ॥ ७ ॥

सत्वस्य जयकाले देवादिकर्तृकसात्त्विककर्मपरिपाककाले भगवान् तत्कालानुगुणः सन् देवादीन् अभजत तद्वृद्धिहेतुर्भवति रजसोजयकालेऽसुरान् तमसो जयकाले यक्षरक्षआदीन् अभजदित्यन्वयः ॥ ८ ॥

---

भाषाटीका ।

जो परम पुण्य माहात्म्य नारदादि ऋषियों से गाया जाता है । अब मैं श्रीकृष्ण मुनि ( वेद व्यासजी ) को नमस्कार करके हरि कथा को कहता हूं ॥ ५ ॥

जो पुरुष जिह्वा को पाकर कीर्त्तनीय विष्णु का कीर्त्तन नहीं करता है वह दुर्मति मोक्ष की निसेनी को प्राप्त होकर भी आरोहण नहीं करता है ॥ ० ॥

तस्मात् आनन्द रस सुन्दर श्रीगोविंद के माहात्म्य को नित्य जो श्रवण करते हैं कीर्त्तन करते हैं वे पुरुष कृतार्थ हैं इस में संशय नहीं ॥ ० ॥

तिसी से गोविंद चरणाश्रित महापुण्य प्रद इस कथा को हे नृपसत्तम ! आप श्रवण करो ॥ ० ॥

प्रकृति से पर अज अव्यक्त भगवान् निर्गुण होकर भी अपने माया के गुणों में । प्रविष्ट होकर, बाध्य बाधक भाव को प्राप्त हुए हैं ॥ ६ ॥

सत्व रज और तम ये तीनो प्रकृति के गुण हैं आत्मा के नहीं । हे राजन् ! उन गुणों का ह्रास वा उल्लास एक ही वार नहीं होता है ॥ ७ ॥

विदन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः ॥ ९ ॥
यदा सिसृक्षुः पुर आत्मनः परो रजः सृजत्येष पृथक् स्वमायया।
सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ ॥ १० ॥
कालं चरन्तं सृजतीश आश्रयं प्रधानपुम्भ्यां नरदेव! सत्यकृत्।
(१) (सतत्रतत्रोभयसिद्धिमाप्नुयाल्लिङ्गात्मनोलिङ्गगुणाश्च सन्ति ॥ ० ॥)
य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्यतः।
तत्प्रत्यनीकानसुरान्सुरप्रियो रजस्तमस्कान्प्रमिणात्युरुश्रवाः ॥ ११ ॥
(स वा पुनः स्वसृष्टस्य स्थितिरक्षानुवृत्तये।
सत्त्वं सुरगणान्विष्णुरुपबृंहयते मुहुः ॥ ० ॥)
अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा।
प्रीत्या महाक्रतौ राजन्! पृच्छतेऽजातशत्रवे ॥ १२ ॥

भाषाटीका

सत्त्व गुण के वृद्धिकाल में ईश्वर देव और ऋषियों के शरीर में प्रविष्ट होकर, और रजो गुण के वृद्धिकाल में असुरों के देह में प्रविष्ट होकर, तथा तमो गुण के वृद्धि काल में यक्ष राक्षसों के देह में प्रविष्ट होकर, तिस २ काल के अनुगुण उनकी वृद्धि करते हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

समस्यापि निमित्तभेदेन वैषम्ये दृष्टान्तः ज्योतिरादिरिव ज्योतिरग्निर्यथाकाष्ठादिषु जलं यथा पात्रेषु आकाशो यथा घटादिषु तथा भगवान्नानारूप आभाति. ननु, तर्हि तद्वदेव विवेकेन किं न प्रतीयते तत्राह, संघातात्सुरादिदेहाद्य विविच्यते न पृथक् प्रतीयते तर्हि तं भजतीति कुतोऽवगतं तत्राह, विदन्तीति, आत्मस्थं परमात्मानं कवयो निपुणाः मथित्वा कार्यदर्शनलिङ्गेन विचार्य जानन्ति अन्ततः स्वभावकालकर्मादिवादनिषेधेन विदन्तीति पाठे वामोऽपि ज्ञानमेव अत्रापि ज्योतिरादिरिवेतिद्रष्टव्यं यथा सूर्यकान्तादौ दाहदर्शनाज्ज्योतिर्ज्ञायते यथा च गन्धदर्शनाद्वायुरित्यादि ॥ ९ ॥

तदेवं मायागुणवशेनैतद्वैषम्यं न स्वाभाविकमित्युक्तम्. तर्हि गुणपारतन्त्र्यादनीश्वरत्वमाशङ्क्याह—यदा आत्मनो जीवस्य भोगाय पुरः शरीराणि परः परमेश्वरः सिसृक्षुर्भवति तदा स्वाम्येन स्थितं रजः पृथक् सृजति विचित्रासु तासु पूर्षु रिरंसुः क्रीडितुमिच्छुर्यदा तदा सत्त्वं पृथक् सृजति शयिष्यमाणः संहरिष्यन्यदा तदा तमः पृथगीरयति प्रेरयति आधिक्यं नयतीत्यर्थः ॥ १० ॥

यदासिसृक्षुरित्यादिनिर्देशात्प्रतीतं कालपारतन्त्र्यं वारयन्प्रधानपुरुषपारतन्त्र्यमपिवारयति-कालमिति। हे नरदेव! प्रधानपुम्भ्यां निमित्तभूताभ्यां सत्यकृदमोघकर्ता ईशस्तयोः सहकारित्वेनाऽऽश्रयभूतं चरन्तं वर्तमानं कालं स्वयमेव सृजति स्वचेष्टारूपत्वात्कालस्य न तत्पारतन्त्र्यमित्यर्थः। तथाऽपि प्रस्तुते किमायातं तत्राह यएषकालः सत्त्वमेधयति वर्धयत्यतोहेतोरीशिताऽपीश्वरोऽपि सत्त्वप्रधानं सुरानीकं देवसमूहमेधयतीव तत्प्रत्यनीकान्सुरान्सुरप्रतिपक्षान्प्रमिणोति हिनस्ति चेत्यन्वयः उरु प्रभूतं श्रवः कीर्तिर्यस्य सः कालशक्तिक्षुभितगुणगतवैषम्यमिह सन्निधिमात्रेणतदधिष्ठातरि स्फुरतीति प्रकरणार्थः ॥ ११ ॥

तदानीं तयोर्न सुरपक्षपातेन वधः किन्तु ब्रह्मशापेनासुरीं योनिं प्राप्तयोरनुग्रहार्थ एवेति वक्तुमितिहासमुपक्षिपति—अत्रेवेति। अत्र द्वेषादिरहितस्यापि दैत्यवधे नारदेनेतिहासः प्रस्तावितः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

"स्वमायागुणमाविश्य बाध्यबाधकतां गतः" इत्येन तत्तद्बाध्यबाधकेषु देवासुरादिवर्गेषु ईश्वरस्यानुप्रवेश उक्तः कथमनुप्रविष्टो विज्ञायत इत्यपेक्षायां तत्तदनुप्रवेशे अनुप्रविष्टस्य विविच्य द्रष्टुमशक्यत्वे सम्यगुपायेन विवेचनीयत्वे च दृष्टान्तमाह—ज्योतिरिति। काष्ठादिषु ज्योतिःप्रभृतिवस्तुवत् अनुप्रविष्टोऽप्याभाति तद्गतदोषास्पृष्टः प्रकाशते. "अनश्नन्नन्यो अभिचाकशीति" इतिश्रुतेरिति भावः सङ्घातात्काष्ठादिसङ्घातादिव देहेन्द्रियभोक्तृवर्गरूप-

(१) इदमधिकत्वेन पठ्यते--विजय।

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

सङ्घातान्न विविच्यते प्रकृतिपुरुषेश्वरतत्त्वयाथात्म्यविद्भिः प्रकृतिपुरुषाभ्यां विलक्षणत्वेन न ज्ञायते इत्यर्थः कवयस्तत्त्वत्रययाथात्म्यविदस्तत्रात्मस्थं जीवात्मनि स्थितम् "य आत्मनि तिष्ठन्, यो विज्ञाने तिष्ठन्" इति श्रुतेः आत्मानं परमात्मानं मथित्वा विवेकपूर्वकं तद्भक्तियोगमभ्यस्येत्यर्थः अन्ततोऽनेकजन्मावसाने विदन्ति साक्षात्कुर्वन्ति स्वमायागुणमाविश्येत्यनेन प्रेरणपर्यन्तानुप्रवेशोऽभिसंहितः ॥ ९ ॥

तदेवगुणप्रेरकत्वं विवृणोति—यदेति । एषः परः पुरुषो भगवान्यदा स्वमायया स्वसङ्कल्परूपज्ञानेन प्रकृत्या वा आत्मनो जीवस्य, जात्यभिप्रायमेकवचनम् आत्मनामित्यर्थः । पुरः शरीराणि सिसृक्षुः स्रष्टुमिच्छुस्तदा रजः सृजति प्रेरयतीत्यर्थः तम ईरयतीत्यनेनैकार्थ्यात् यदा सृष्ट्यनन्तरं विचित्रासु पूर्षु देहेषु रिरंसुः रन्तुमिच्छुः रिरक्षिषुरित्यर्थः । तदा सत्त्वं सृजति. यदाचेश्वरः शयिष्यमाणः उपसञ्जिहीर्षुस्तदासौ परमपुरुषस्तम ईरयति ॥ १० ॥

अथ तदा तत्कालानुगुणोऽभजादिति सूचितं कालप्रेरकत्वं विवृणोति—कालमिति । हे नरदेव ! ईशः परमात्मा चरन्तं प्रवर्त्तमानमाश्रयं स्वव्याप्यतया शरीरभूतं कालं सृजति निमेषकाष्ठाद्यवस्थं करोति एवं कालं सृष्ट्वा प्रधानपुरुषाभ्यां चिदचित्समष्टिभ्यां सत्यकृत सत् चिद्व्यष्टिः त्यत् अचिद्व्यष्टिः तदुभयं करोतीति तथा सत्यच्छब्दयोश्चिदचिद्व्यष्ट्योः प्रयोगः "तदनुप्रविश्य सच्चत्यच्चाभवत्" इत्यादि श्रुतौ प्रसिद्धस्तथा सत्यच्छब्दयोस्तत्परत्वे श्रुतिः । "अथ यद्देवेभ्यःप्राणेभ्यश्च तत्सत्, अथ यद्देवाः प्राणाश्च तत्यं तदेकया वाचा समभिव्याह्रियते सत्यमिति" इति. देवाः देवाधिष्ठितानीन्द्रियाणि तेभ्यः परः तत्संसृष्टश्चेतनः सत् देवाद्यचिद्व्यष्टिस्तु त्यं तदेतदुभयं सत्यमित्येकया वाचा एकशब्देन समभिव्याह्रियते बोध्यते इति तदर्थः । एवमीश्वरस्य तत्तज्जीवकर्मपरिपाकानुगुणकालप्रेरकत्वमुक्तं तच्चात्मत्वेन तदनुप्रवेशपूर्वकमिति च, ईश्वराधीनः कालो देवादीनां तत्तत्कर्मपरिपाकानुगुणसत्त्वादिगुणवृद्धिहेतुरिति वदन् सर्वान्तरात्मतया देवादिकर्मानुगुणं गुणान् प्रेरयतो नेश्वरस्य वैषम्यमित्युत्तरमुपसंहरति--यइति । हे राजन् ! ततः कर्मानुगुण्येनेश्वरस्य गुणकालप्रेरकत्वात् य एषः गुणप्रेरकः कालः कालशरीरकः तत्प्रेरकश्चेशिता ईश्वरः सत्त्वं कर्मपरिपाकायत्तकालकृतगुणोन्मेषसत्त्वगुणप्रचुरं सुरानीकमिव सुरानीकमेव 'इवशब्दोऽवधारणे' वर्द्धयति तस्यैव जयमावहतीत्यर्थः तद्वृद्धेस्तत्प्रतिपक्षक्षपणपूर्वकत्वात्सुराणां प्रियस्सन् तत्प्रत्यनीकान् सुरानीकप्रतिपक्षरूपान् रजस्तमःप्रचुरान् प्रमिणोति विनाशयति उरुश्रवाः विपुलकीर्तिः असुरानीकविनाशनेन वैषम्यादिसम्भावनया नापकीर्त्तिमानीश्वरः, किन्तु विपुलतमकीर्त्तिमान् इत्यर्थः ॥ ११ ॥

एवं सर्वभूतसुहृदः समस्येश्वरस्य देवासुरादिजयापजयहेतुत्वेपि कर्मानुगुण्याद्वैषम्याभाव उक्तः इदानीं तस्य सर्वभूतसुहृत्त्वे इतिहासं दर्शयति—अत्रेति । अत्रैव तस्य सर्वभूतसुहृत्त्व एव हे राजन् ! महाक्रतौ राजसूये प्रीत्या अत्यादरेण पृच्छते अजातशत्रवे युधिष्ठिराय सुरर्षिणा नारदेनेतिहास उदाहृतः ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इममर्थमनुभाविकं करोति—ज्योतिरादिरिति । अयमर्थः ज्योतिरादीत्युत्तरायणादिकालादिगुणः केषाञ्चित्फलानामुत्साहं केषाञ्चिद्ध्रासं कुर्वन् यथा सत्त्वादिजयादिविषये उत्साहादिकालमनुवर्तमानो भाति तथेतिकथमव्यक्तत्वं हरेरिति तत्राह—संघातादिति, देहेन्द्रियादिकार्यकारणसंघातान्न विविच्यते पृथग्भूतो न ज्ञायते अत्रापीदमेवोदाहरणं ज्योतिरादि घृतादि द्रव्यं दध्यादिभ्यो मथनात्पूर्वं न विविच्यते पृथग्भूतं न ज्ञायते न प्रतीयते तथात्मापीतिभावः "तेजोऽसितंत्रेधाविधीयते" इतिश्रुतेः । घृतस्य ज्योतिःशब्दाभिधेयत्वं प्रामाणिकं "दधिस्थघृतवत्काष्ठे वह्निवच्चजनार्दनः" इत्यादेश्च. ननु, यदि केनचिद्देहादिव्यतिरिक्तत्वेनायं ज्ञायते तर्हि दधिस्थघृतवदित्यादिनिदर्शयितुं शक्यं, तदेव कुत इत्याह—विदन्तीति । कवयः ब्रह्मादयः शास्त्रेण मथित्वा ततो निर्णीयात्मस्थं देहादिस्थमात्मानं विदन्ति जानन्ति किंचान्ततश्चरमनाशे विदन्ति लभन्ते "लभनिष्पत्तौ" इतिधातोः नितरां प्राप्नुवन्तीत्यर्थः अनेन कवीनां ज्ञानमस्मिन्नर्थे प्रमाणमुक्तं भवति ॥ ९ ॥

देहादेर्विविक्तत्वेन ज्ञानं कस्मान्नोत्पद्यत इति आशंक्य सृष्टिशरीरेषु जीववत्प्रतिष्ठत्वान्न तद्विषयं ज्ञानमित्यभिप्रेत्याह—यदा सिसृक्षुरिति । यदा परमात्मात्मनोर्थे निवासाय पुरः शरीराणि सिसृक्षुः स्रष्टुमिच्छति तदा गुणवैषम्यन्यायेन स्वेच्छया नियतो रजोगुणमुपादाय महदहंकारपञ्चमहाभूतानि सृष्ट्वा तैः पृथक् तत्तद्योग्यतानुसारेण शरीराणि सृजति । यदा चेश्वरस्तासु विचित्रासु सुरनरतिर्यक्संज्ञितासु पुरीषु रिरंसुः जीवगतस्वादृष्टयोग्यतामनुसृत्य सुखादिकमुत्पाद्य तत्साक्षित्वेन क्रीडितुमिच्छति तदा स्थितिहेतुत्वात्सत्त्वगुणमुपादत्ते यदा शयिष्यमाणो योगनिद्रां चिकीर्षति तदाऽसौ तमोगुणमीरयति तच्छक्तिमुज्जृम्भयति ॥ १० ॥

किञ्च चरंतमतीतानागतवर्तमानभेदेन वर्तमानं कालं सृजतीत्यर्थः ईश आश्रय इत्येताभ्यां पदाभ्यां सर्जनसामर्थ्यं सूचयति अत्र प्रमाणमाह—सत्यकृदिति, सत्यं मीमांसाशास्त्रं तस्य कर्ता ॥ इदानीं स्वसृष्टानामन्तःशयनप्रकारमाह—स तत्रेति, तत्र तत्र देहेषु स्थितम् उभयसिद्धि महति वस्तुनि महत्परिमाणम् महासामर्थ्यप्रकटनमणुपरिमाणमणुसामर्थ्यं वाप्नुयात् "अणोरणीयान्महतोमहीयान्" इतिश्रुतेः अत्रेदं लिङ्गात्मनो लिङ्गगुणाश्च सन्तीति निदर्शनं चशब्द एवार्थे यथा लिंगं शरीरस्थानीयं काष्ठं व्याप्य तिष्ठन्नग्निर्लिंगात्मेत्युच्यते तस्याग्निर्लिंगस्य काष्ठस्य गुणाः महत्त्वाणुत्वलक्षणाः सन्ति महति काष्ठे महान् अणुनिकाष्ठे अणुरग्निरिति "लिङ्गं शरीरे चिह्ने च साधने शेफभस्मनि" इत्यभिधानं. ननु सृष्टौ प्रवर्तमानेश्वरस्य निरपेक्षत्वात्स्वातंत्र्येण किञ्चित्कारणापेक्षासम्भवः तदनपेक्षत्वे मृद्दंडादेरिवशक्त्यभावेन कार्यसामर्थ्यभाव इति तत्राह—लिङ्गात्मनः प्रधानादेः कारणस्य ये लिङ्गगुणाः कार्यजनकशक्तिलक्षणाः सन्ति ते च लिङ्गात्मनः शरीरस्वामिनो हरेः सन्ति विद्यमानास्तदधीनत्वादिति क्रियावृत्त्या योजनीयं "द्रव्यं कर्म च कालश्च" इत्यादेः यद्वा लिङ्गस्य प्रधानादेर्गुणाः कार्योत्पादनशक्तिलक्षणाः लिङ्गात्मनः पूर्णज्ञानियच्छतया स्वरूपस्य

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरेः सन्ति तेषां स्वरूपाभिन्नत्वद्योतनाय चशब्दः ऊर्णनाभि-रस्वुरीवेमादिविना स्वरूपभूतलीलयैव यथा जालं करोति तथा-यमित्यर्थपरो वा प्रधानसृष्टिर्ब्रह्मणोऽस्तु अवान्तरसृष्टिरवान्तरका-रणात्स्यात् कुलालादेर्दृष्टत्वादित्यतोवाह—स इति, तत्रतत्र का-र्यकारणेषु प्रातिस्विकेषु स्थितत्वोभयसिद्धिं जगत्कारणस्य जन-कत्वलक्षणां कार्यस्य जन्यत्वफलं प्रापयति उभयोः शक्त्योरेत-दधीनत्वादित्याह--लिंगात्मन इति, लिङ्गात्मनो मृदादेर्लिंगगुणाः कार्यजननशक्तयः सन्ति ते चानेन नियता इति शेषः, लिङ्गा-त्मनः कार्यस्य ये लिंगगुणा पृथुबुध्नोदराकारादिलक्षणाः सन्ति ते च "तत्रतत्रान्वितो विष्णुस्तत्तच्छक्तिप्रबोधकः" इत्यादेः अने-न बोध्यबाधकताङ्गत इत्येतत्स्पष्टीकृतं तथाहि तत्रतत्र देवासुरे-षु उभयसिद्धिं जयपराजयलक्षणां कार्यसिद्धिं प्राप्नोति शिर-स्त्राणवर्मादिलक्षणां वहतो भटस्य ये लिङ्गगुणाः शौर्यादिल-क्षणाजयापजयौ वा ते च हर्यधीनाः "स वै बलं बलिनां चा परेषाम्" इत्यादेः । अत्र सर्वस्य हर्यधीनत्वदर्शनाय प्रधानपुंभ्यां कार्यकारणाभ्यां कालः सृजतीत्यङ्गीकारे प्रधानपुरुषावन्तरेण काल-सृष्ट्यशक्तिर्हरेःप्रकटिता स्यादित्यन्यथा प्रतीतिनिरासायाचार्यै-स्ताभ्यां सहेति व्याख्यातम् ॥ ० ॥

नन्वत्र साम्यगुणाधिकरणस्य हरेर्वैषम्याधिकरणत्वं कथ-मित्यस्य प्रश्नस्य परिहारः कथं स्फुटमायात इत्याशंक्य स्वतो देवप्रियत्वमसुराप्रियत्वं मनुष्याणामुभयत्वमेव समत्वं तत्तद्यो-ग्यतावतां तेषामन्यथा तदतिलंघने त्वदभिमतवैषम्यप्राप्तिसाम्य-हानी स्यातामित्याशयवानाह--य एष इति । य एष हरिः काले कालविषयेपि ईशिता कालस्यापि प्रवर्तनसमर्थः प्रधानपुरुषयो-रीशितृत्वं किं वक्तव्यमित्यपिपदं स विष्णुः सुरानीकमिवस्थि तं सत्त्वमेधयति सत्त्वस्य देहादिकारणत्वात्सत्त्वगुणप्रधानान् देवान् समेधयतीत्यर्थः रजस्तमस्कान् रजस्तमःस्वभावान् तत्प्र-त्यनीकान् तेषां सुराणां शत्रुभूतान् असुरान् प्रमिणोति निघ्न-न्ति 'मिञ्-हिंसायाम्' इति धातुः सुरप्रिय इत्यनेनासुराणामप्रियो मनुष्याणामुभयात्मकः स्वभावत इति ध्वनितं तदुक्तं—

"स्वभावतः प्रियत्वात्तु सदा देवप्रियो हरिः ।
अप्रियश्चासुराणां स स्वभावात्तूभयं नृणाम्" इति ।

सत्त्वमेधयति इत्यनेन या सुखयोग्यता रजस्तमस्कानित्यनेन या वधयोग्यता ये च देहेन्द्रियादेः कारणभूतास्त्रयोगुणाः यश्च गुणानामुत्साहकरः कालः यच्च तेषां त्रयाणां गुणानां पुण्य-पापोभयलक्षणं कर्म यच्च मूलकारणभूतं प्रकृतिपुरुषस्वरूपं यच्च भक्त्यादिकमेतत्सर्वमवेक्ष्य देवानां भक्त्यादिगुणानितरेषां द्वेषा-दिदोषान्मनुष्याणामुभयात्मकमुत्पाद्य सुखासुखजयापजयजननमर-णादिफलदातृत्वेन समइत्युक्तं । तदुक्तं—

"देशकालौ गुणांश्चैव भक्त्यादीनप्यपेक्ष्य तु ।
योग्यताञ्च तथा कर्म सम इत्यभिधीयते ॥
स्वतः प्रियोपि देवानामुत्पाद्यैव गुणानिमान् ।
इतरेषां तथा दोषान्सुखदुःखे ददात्यजः ॥
उभयं तु मनुष्याणामतः सम इतीरितः" ॥ इति

ननु सुरादिषु स्थितानां गुणदोषाणां तत्तत्कालीनत्वेनोत्तर-काले नाशसंभवेनानित्यत्वे नियमो न स्यादित्याशंक्य शास्त्रविहि-तत्वान्नियमोऽस्त्येवेत्याशयवानाह--उरुश्रवा इति, उरु बहु श्रूयते इत्युरुश्रवाः शास्त्रं नियमप्रतिपादकं यस्य स तथा तदप्युक्तम्—

"अनादिनियताश्चैव गुणदोषाः सुरादिषु ।
यथाक्रमं पुनश्चैव नियमाद्वर्द्धितास्तथा ॥

"विष्णुनैव ततो नित्यं विषमश्च जनार्दनः" इति नियमाद्वर्द्धितास्त-थेत्येतत्कुत्रप्रमाणीक्रियते इत्यस्य उरुश्रवाइत्यत्रेति वक्तव्यम् उरु वर्द्धनलक्षणं श्रवो यस्य स तथेत्यर्थः । ननु, वैषम्यं तदवस्थमे वाभूदिति चेन्न योग्यतानिमित्तत्वात्तदुक्तम् "नविष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित्" इति हरेर्योग्यतानियत्यायत् आगच्छद्वै-षम्यलक्षणमुरुश्रवस्तदा तदस्तुविहितत्वादतउक्तं उरुश्रवा इति तदप्युक्तं "योग्यतायास्तन्नियत्या विषमत्वं भवेदिति" नन्वेवं-तर्हि क्वापि वैषम्यं नेत्यापन्नमिति चेदुच्यते शुभाशुभयोर्विपर्य-ये शुभवतामशुभकर्म अशुभवतामसुराणां शुभकर्मानुसृतफल-दानेसति विषमत्वं विष्णोर्दोषाय स्यादिति यदतस्तत्तद्योग्यता-बलविहितशुभाशुभोभयकर्मानुसारेण तत्तत्फलस्य विकर्मेन्द्रियार्थे अशुभकर्मदैत्यबललक्षणस्य दानेनेश्वरवैषम्यमित्यत उरुश्रवा-इति जयस्तम्भकल्पनाम हरेर्युक्तं "इन्द्रस्यार्थेकथं दैत्यानवधी-द्विषमो यथा" इत्यादि प्रश्नपरिहार इति सिद्धं "विषमत्वन्तु दोषाय शुभाशुभविपर्यये । अतस्तादृशवैषम्यम् ब्रह्मसूत्रे निराकृतम् ॥ शुभाशुभनियंतृत्वं न दोषो गुण एव सः । अतस्तदिष्टं कृष्णस्य ब्रह्मसूत्रकृतो विभोः" इतिवचनात् ॥ ११ ॥

सुरप्रिय इत्येतद्विवृणोति-सवा इति । अयमर्थः सत्त्वं सत्त्वगुण-सम्पन्नान् मुहुरनुयुगमुपबृंहयते सम्यक् वर्द्धयति किं कारणम-त्राह--पुनरिति । स्वेन सृष्टस्य जगतः पुनःपुनः स्थितिरक्षानुवृत्तये स्थितिपालनयोः प्रवर्तनार्थं वा इत्यनेन सृष्ट्यादिष्वष्टकमपि हरेरे-वेति दर्शयति-यदा सिसृक्षुरित्यनेन, यः प्रस्तुतस्तं स इति तच्छब्देन परामृशति तत्रापीश्वरशब्देन रुद्र उपक्रान्त इति भ्रान्तिनिवार-णाय विष्णुरिति यद्वा यत्र क्वापि रुद्रादुत्सर्जनादिकं प्रतीयते तदपि तत्स्थहरिणेति प्रकटनाय विष्णुरिति० ॥

सुरप्रिय इत्येतदितिहासेन दर्शयति-अत्रेति । सुरप्रिय एव नासुरप्रियो हरिरिति अन्ययोगव्यवच्छेदार्थ एव शब्दः ॥१२-१४॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु, तेषुतेषु तेनाविश्यमानं तेजः कथं न लक्ष्यते ? तत्राह--ज्योतिरिति । यद्यपि तेषुतेषु निजतेजोंशेनाविष्टोऽसौ सङ्घातात् संमिश्रत्वात् न विविच्यते लोकैर्विवेक्तुं न शक्यते तथापि कवयो विवेकनिपुणा अन्ततो मथित्वा तस्यापि साहाय्यं तेनापि युक्तमि-त्यादिकासम्भावनानिषेधेन विविच्य तदंशमात्मस्थं तत्तदात्मनि प्रविष्टं आत्मानमीश्वरं विदन्ति तत्र हेतुगर्भो दृष्टान्तः, यस्मात्तेजः ज्योतिरादिपदार्थं इवाभाति दृष्टिष्विति शेषः । अयमर्थः यथा-नेदं मणेस्तेजःपूर्वमदर्शनात् । किन्तु तदातपसंयोगेन सौरं तेज एवात्र प्रविष्टमिति सूर्यकान्तादौ तूलादिदाहेन तदनुभविषु तदाभाति

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यथाच पूर्ववदेव वायावयंगन्धः पार्थिवएव प्रविष्ट इति तेष्वाभाति तथात्रापीति अथवा नन्वेवं तत्रतत्रावेशितैः स्वतेजोभिरेव क्रीडती त्यागेन कथं तद्वितैरपि क्रीडतीति दृश्यते तत्राह--ज्योतिरिति । यथा चक्षुरादिज्योतिर्भिः स्वांशे रूपमात्रे प्रकाश्यमाने गन्धादि गुणापेक्षा मृदेवासौ प्रकाशत इति प्रतीयते यथा कर्णादिनभसा स्वांशे शब्दमात्रेऽपि गृह्यमाणे दुन्दुभिरेवासाविति प्रतीयते । तच्च तत्तद्गुणानां संमिश्रत्वादेव भवति न वस्तुतः । तथाकवय आत्मानम् ईश्वरं तत्तत्संघातस्थत्वेनान्यैरजानन्ति विविक्तमपि आत्मस्थं स्वांशे ज्योतिर्भिरेव क्रीडन्तं जानन्तीत्यर्थः ॥ ९ ॥

तदेवं युद्धादिनिजलीलाभिर्भक्तविनोदनमेव प्रयोजनं विश्वपालनन्तु स्वत एव ततः सिद्ध्यतीत्युक्त्वा सृष्टिप्रलययोः प्रकृतीक्षणादावपि सर्वशङ्कानिरासार्थमिति दिशम् त्रिष्वप्यविशेषमाह—यदेति । यदा यत्र स्वचेष्टालक्षणे काले एष परः परमेश्वरः स्वमायया भक्तकृपया आत्मनः पुरः प्राचीनसृष्टिगतसाधकभक्तरूपाणि स्वस्वाधिष्ठानानि सिसृक्षुर्भवति । प्रकृत्या सह तेषु लीनेषु आविर्भावनार्थमीक्षां करोति । तदा पृथक् स्वरूपशक्तेरितरा असौ जीवमायाख्या शक्तिः पूर्ववत्तच्चेष्टात्मकप्रभावाभासाद्दीप्ता रजः सृजति स्वांशभूताद्गुणत्रयसाम्यादव्यक्तात्त्वाक्षिपति उद्बोधयतीति वा । यथा वा पृथङ्मायानुगत एष काल एव सृजति तथाऽसौ पदेन च काल एवोच्यते अथ विचित्रासु नानागुणवैचित्र्यवतीषु तल्लक्षणासु पूर्षु यदा रन्तुमिच्छुर्भवति तदा सत्त्वं सृजति । यदा पुनस्ताभिरेवमिलित्वा शयिष्यमाणः शयितुमिच्छुर्भवतीत्यर्थः । तदासौ तमः सृजतीति । ततो भक्तनिमित्तमेव सर्वा एव सृष्ट्यादिक्रियाः प्रवर्त्तन्त इति भावः । यथाङ्गीकृतमेकादशस्य तृतीये टीकाकृद्भिरपि किमर्थं ससर्ज । स्वमात्रात्मप्रसिद्धये । स्वं मिमीते प्रमिमीते य उपास्ते स स्वमाता । तस्यात्मनो जीवस्य प्रकृष्टायै सिद्धय इति । शयनमत्र पुरुषावतारस्य कदाचित् प्रलयोदधौ योगनिद्रा कदाचिद्भगवत्प्रवेशो वा यद्यपि सर्वेष्वपि जीवेषु अन्तर्यामितया परमेश्वरस्तिष्ठति तथापि तत्रासंसक्तत्वादस्थित एव भवति । स्वभक्तेषु तु समासक्तत्वान्न तथेति । न च तत्सङ्गावौ तस्येच्छेति यथोक्तव्याख्यानमेव बलवत् । तथा च श्रीगीतासु "मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः । न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्" इति "ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" इति च । उक्तञ्च हरिभक्तिसुधोदये । "भक्तानां हृदयं शान्तं सश्रियो मे प्रियं गृहम् । वसामि तत्र योऽमैव वैकुण्ठाख्यादिवर्णना" इति ॥ १०

ततो य एष चेष्टारूपः कालः स सत्त्वम् । सत्त्वप्रधानं सुरानीकमेधयतीव तत एव तत्प्रत्यनीकान् रजस्तमःप्रधानानसुरान् प्रमिणोतीव हिनस्तीव । ये तु देवेषु भक्ता असुरेषु भक्तद्वेषिणश्च तान् स्वयं पालयति हिनस्ति चैवेति पूर्वमेवोक्तम् । तस्मात्स्वचेष्टालक्षणस्य कालस्यैवं वार्त्ता तस्मादीशितापि एधयतीव प्रमिणोतीव चेति । हे राजन्निति पूर्वाभिप्रायमेव । ननु यदि चेशितुः प्रयोजनं न भवति तर्हि कथं कदाप्यसुरानपि स्वपक्षान् विधाय देवैर्न युज्यतेति तत्राह-सुरप्रियः सुरेषु वर्त्तमानाः प्रिया भक्ता यस्य सः । सत्त्वप्रधानेषु सुरेषु प्रायशस्तेषां सर्वेषामनुगमनेनैव तस्यानुगमनम् । कदाचिद्बृहस्पत्यादिषु महत्स्वपराधे तेषामभिन्नत्वेन सुरत्वाच्छादनात्तेषां तस्य तेष्वनुगमनं न स्यादिति जयकाले तु सत्त्वस्येत्याद्युक्तमिति भावः । ननु कथं तेऽपि तान्नानुगच्छन्ति तत्राह--रजस्तमस्कानिति । अत्यन्तभगवद्बहिर्मुखताकयोस्तयोर्गुणयोररोचकत्वादेवेति भावः । तर्ह्यसौ सदैवासुराणां निग्रहमेव करोतीत्यथाप्यसामञ्जस्यमेवेत्याशङ्क्याह उरुश्रवाः वैरेण यं नृपतय इत्यादि । अहोवकीयमित्यादिभिः उरु सर्वतो विस्तृतं महत्तमं वा श्रवः कीर्त्तिर्यस्य सः । तेषामप्यनुग्रहं करोतीति भावः ॥ ११ ॥

तदेवं सिद्धान्तं प्रदर्श्य तत्र स्वभक्तानुग्रहमात्रप्रयोजनस्तत्तत्करोति परेश इति प्रतिज्ञातार्थोदाहरणाय प्रह्लादजयविजयादिकृपासूचकमितिहासविशेषमाह—अत्रैवेति । अत्र विद्वेषादिराहित्येन भक्तानन्दनार्थं स्वैरलीलामात्रत्वे असुराणामपि परमहितपर्य्यवसायकस्वभावत्वेच । एवकारेण सिद्धान्तान्तरं व्यावर्त्यते ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सत्त्वादीनामाधिक्यन्यूनताभ्यामेव तदधिष्ठानस्याप्याधिक्यन्यूनते इत्यत्र दृष्टान्तमाह—ज्योतिर्यथा—काष्ठेषु जलं—यथा—पात्रेषु आकाशं यथा घटेषु अधिकेष्वधिकरूपं न्यूनेषु न्यूनरूपं तिष्ठदपि न विषममुच्यते । तथैव देवनिष्ठसत्त्वेऽधिके सति सोऽपि देवेष्वधिकरूपः तदैवासुरनिष्ठे रजसि न्यूने तत्र न्यूनरूप इत्यसुराणां देवबाध्यत्वे देवानामसुरबाधकत्वे सति सोऽपि देवपक्षपाती असुरबाधक इत्युच्यते । एवमसुरनिष्ठरजस्यधिके सोऽप्यसुरपक्षपाती देवबाधक इति लोकप्रतीत्या विषमोऽप्यविषम एवेत्यर्थः । जयकाले तु सत्त्वस्य देवर्षीनऽभजदित्याधिकभजनमेव तत्र विवक्षितं तदेव देवपक्षपातित्वव्यञ्जकम् । नत्वजयकाले केवलमभजनमेवेति ज्ञेयम् । ननु काष्ठादिषु ज्योतिरादिर्यथाऽस्मिन् काष्ठेऽयं वह्निरित्येवं विवेकेन प्रतीयते तथा देवादिदेहेऽपि भगवान् किं न प्रतीयते तत्राह सङ्घातात् देवादिदेहात् न विविच्यते सत्त्वन्य इव न पृथक् प्रत्यक्षीभवतीत्यर्थः । तर्हि स नान् भजतीति कुतो ज्ञायते तत्राह—विदन्तीति । आत्मस्थं देहस्थं परमात्मानं कवयो निपुणा मथित्वा कार्यदर्शनलिङ्गानुमानाज्जानन्ति । अन्ततः स्वभावकर्मादिवादनिषेधेन विन्दन्तीति पाठेऽपि लभन्ते जानन्तीत्येवार्थः । नन्विन्द्रादिपक्षपाती भगवान् कदाचित् सर्वैः प्रत्यक्षीभूत एवासुरान् हन्ति । तथैव रजस्तमसोरपि वृद्धौ सत्यां कदाचिदसुरादीनामपि पक्षपाती भवन् देवादीन् हिनस्तु तदेवोक्तयुक्त्या तस्य साम्यं सिद्ध्येदित्यत आह—ज्योतिरादिरिवेति तमेव श्लोकं तन्त्रेणार्थान्तराभिप्रायकं ज्योतिरादिरिव ज्योतिरादिगतं रूपरसगन्धस्पर्शो यथा सङ्घाते तद्वति वस्तुनि आभाति स्पष्टतया भासते किञ्चित्तथा किञ्चित् सङ्घातात्तस्मान्न विविच्यते न पृथक् स्पष्टमाभाति

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भाति च किन्तु तदन्तर्गततयैव भाति एवमेव जगत्यस्मिन् देवासुरादिषु मध्ये भगवान् क्वचित् स्पष्टं भासते। क्वचित्तदन्तर्गतश्च तिष्ठतीत्यर्थः । तत्र ज्योतिषः सत्त्वप्राधान्यादनावरकत्वात् तद्गतं रूपं यथा किञ्चिद्दूरेऽपि शुक्लमिदं क्षीरमिति सुदूरे लक्षद्वयेऽपि चन्द्रोऽयं शुक्ल इति तत्र तत्र नयनेन्द्रियेण गृहीतं स्पष्टमाभाति तथैव देवादेः सत्त्वप्राधान्यात् सत्त्वेनानावरणात्तद्गतो भगवांस्तत्पक्षपाती स्पष्टमेवोपेन्द्रादिरूप आभाति यथा च जलादेस्तमोरजःप्राधान्यात्तेनावरणात्तद्गतं शब्दरसगन्धस्पर्शं न स्पष्टमाभाति किन्तु तद्गतः पदार्थस्य योग एवेन्द्रियगोलकेषु तमोरजसोरपि किञ्चित् सत्त्वसत्त्वात् सर्वथा आवरणाभावादेव तथाहि रसनायां रसवतो योग एव रसः । श्रोत्रे शब्दवत् आकाशस्य योगे सत्येव शब्दः । त्वचि शैत्यादिमद्वस्तुयोग एव स्पर्शः । नासायां गन्धवतो वायोर्योग एव गन्ध इति तथैवासुरराक्षसादेरजस्तमःप्राधान्यात्तेनावरणात्तद्गतो भगवांस्तत्पक्षपाती न स्पष्टमाभाति अत्र मेघातपाभ्यामावरणानावरणे सूर्यस्य यथा तथैव तमःसत्त्वाभ्यां भगवतो ज्ञेये । ननु तर्हि स्पष्टमानाभावे असुरादिपक्षपातित्वं तस्य कथं प्रतीमस्तत्राह—विदन्तीति । देवपराभवादिकार्यदर्शनलिङ्गेन जानन्तीत्यर्थः ॥ ९ ॥

नचैवं गुणतारतम्येन तस्याधिष्ठातृत्वतारतम्यलक्षणयन्त्रेण गुणाधीनत्वमाशङ्क्यं किन्तु गुणानामपि स्रष्टुस्तस्य तत्तत् सर्वं स्वैरलीलामयमेवेत्याह--यदा आत्मनो जीवस्य भोगाय पुरः शरीराणि परः परमेश्वरः सिसृक्षुर्भवति तदा साम्येन स्थितं रजः पृथक् सृजति । विचित्रासु तासु पूर्षुरिरंसुः शिष्टपालनलक्षणां रमणां चिकीर्षुः सत्त्वं पृथक् सृजति शयिष्यमाणः संहरिष्यन् तमः पृथगीरयति प्रेरयति ॥ १० ॥

यदा सिसृक्षुरित्यादिनिर्देशात् प्रतीतं कालपारतन्त्र्यमपि वारयति—कालमिति । हे नरदेव ! सहकारित्वेनाश्रयभूतं चरन्तं वर्त्तमानं स्वयमेव सृजति कालस्य तच्चेष्टारूपत्वात् । अयमर्थः । जगत् सृष्ट्यादिकं हि तस्य लीलयैव, सा च स्वेच्छाधीनैव तत्र यदा सिसृक्षा भवति तदा रजो वृद्धिसृष्टिकालो जायते यदा पिपालयिषा तदा सत्त्ववृद्धिपालनकालः । यदा संजिहीर्षा तदा तमोवृद्धिनाशकाल इति कालविशेषस्तेनैव सृज्यते तत्र यदा सृष्ट्यादिकालस्तदैव सिसृक्षादिकं स्यादिति यदा शब्दवाच्यः कालविशेष एव स तु सृज्य एव इति, जयकाले तु सत्त्वस्येत्यादिनापि प्रतीतं कालपारतन्त्र्यं वारितमितिप्रधानेन मायाशक्त्या पुरुषेण स्वांशेन च सह वर्त्तमानः एवं स सर्वकारणत्वात् तस्यैव स्वातन्त्र्यं तत्कार्यत्वाज्जगतस्तदधीनत्वं । ननु, तत् कार्यं जगदवस्त्वेव अवस्तुनः किमधीनत्वात्तधीनत्वविचारेणेति केचिदाहुस्तत्राह सत्यकृत् भगवच्छक्तिकार्यस्य विश्वस्य मिथ्यात्वानर्हत्वात् । कार्यमात्रस्यैव मिथ्यात्वे तदनुमेये भगवत्यपि प्रमाणाभावः प्रसज्जेदिति भावः "सत्यं ह्येवेदं विश्वमसृजते"ति माध्वभाष्य प्रमाणिता श्रुतिश्च अतः कालस्य तत्कार्यत्वात्कार्यधर्मः कारणेप्युपचरित इत्याह--य

एष इति। अतएवईशः परमेश्वरोपि सत्त्वं सत्त्वप्रधानं सुरानीकमेधयतीवेत्यर्थः तत्प्रत्यनीकान् सुरप्रतिपक्षान् प्रमिणोति हिनस्तीवेत्यर्थः । तदेवं वैषम्यं गुणस्यैव नान्यस्य तत्र कालएव निमित्तं यथा पुरुष सृज्यत्वाधीनत्वाधिष्ठेयत्वेपि गृहाणामुष्णत्व शैत्यादिकं गृहाणामेव न पुरुषस्य तथा, किञ्च सुरप्रिय इति अथवा सुराणां भक्तत्वाद्वैषम्यमपि भूषणमेव नतु दूषणमेवेति पृथगेव सिद्धान्तः यदुक्तम् "समोहं सर्वभूतेषु" इति । कदाचित् सुराणामसुरपराभूतत्वन्तु हितैषिणा भगवतैव तन्मत्ततानिवारणार्थं क्रियत इति ज्ञेयं । ननु, तस्य सर्वप्रियत्वं सर्वसुहृत्त्वञ्च कथमित्यत आह—उरुश्रवाः "अहो वकीयं स्तनकालकूटम्" इत्यादि वाक्यप्रकाशितानि महादुश्चेष्टितपूतनादिगतिप्रदत्वलक्षणयशांस्येव सर्वप्रियत्वं सर्वसुहृत्त्वञ्च विख्यापयन्तीतिभावः ॥ ११ ॥

उक्तमेवार्थं । स्पष्टमेव बोधयितुमितिहासमुपाक्षिपति अत्रैव साम्य सौहार्दप्रियत्वेष्वर्थेषु ॥ १२—१४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वमायागुणमाविश्येत्युक्तं तत्र प्रविष्टस्तत्तद्दोषास्पृष्टएव भगवान् वर्त्तते अवैर्दुर्ज्ञेयोपि तत्वज्ञैर्ज्ञायते इत्याह—ज्योतिरादिरिवेति । काष्ठादिषु ज्योतिरिव वनादिषु वायुरिव जलादिषु खमिव सर्ज्जीवेषु मायागुणकार्येषु देहेन्द्रियादिसंघातेषु तत्तद्दोषास्पृष्टएव भगवान् आभाति प्रकाशते तथापि संघातात् न विविच्यते भोक्तृभोग्यदेहविलक्षणतया भोक्तृभोग्यनियन्तृपदार्थानभिज्ञैर्न ज्ञायते कवयः क्रान्तदर्शिनो भोक्तृभोग्यनियन्तृस्वरूपयाथात्म्यज्ञाः आत्मस्थं देहेन्द्रियादिसहिते आत्मनि "य आत्मनि तिष्ठन्" इत्यादिश्रुतिप्रसिद्धे जीवे प्रेरकतया स्थितम् आत्मानं परमेश्वरम् मथित्वा अन्नमयादिभ्यो चेतनेभ्यो भोग्यभूतेभ्यः भोक्ता विज्ञानमयोऽते वर्णितस्तदन्ते नियन्तानन्दमय इत्येवं मथनं कृत्वा चतुर्भ्यः कोशेभ्योंते वर्त्तमानं विदन्ति जानन्ति साक्षात्कुर्वन्तीत्यर्थः ॥ ९ ॥

किञ्च जीवहितार्थैव सृष्ट्यादि कालानुसारेण गुणानपि वैषम्यादिदोषास्पृष्टोभगवानेव प्रेरयतीत्याह यदेति एषः परः परमात्मा आत्मनः समष्टिव्यष्टिजीवानां जातावेकवचनम् नित्यो नित्यानां चेतनश्चेतनानानामेको बहूनामिति श्रुतौ जीवानां बहुत्वात् पुरः सिसृक्षुः समष्टिशरीराणि सिसृक्षुर्भवति यदा तदा स्वमायया स्वकीयया प्रकृत्याख्यया शक्त्या हेतुभूतया पृथक् रजः सृजति प्रवर्तयति विचित्रासु तासु पूर्षुरिरंसुः पालनलीलया क्रीडितुमिच्छुः सत्त्वमीरयति प्रेरयति शयिष्यमाणः संहरिष्यन् पृथक् पृथक् तम ईरयति ॥ १० ॥

कालमपि स्वशक्तिभूतं भगवानेव परमाण्वादिरूपेण सृजति नतु तावतापि विषमोभवतीत्याह—कालमिति । चरन्तमित्युपलक्षणं जङ्गमं स्थावरं च प्रति आश्रयं तेषामुत्पत्तिस्थित्यादिनिमित्तं परमाण्वादिद्विपरार्धान्तरूपं सृजति किंबहुना विविधविचित्रविश्वकर्तृत्वेपि भगवतो वैषम्यादिदोषलेशवार्तागन्धस्पर्शित्वं नास्तीत्याशयेनाह हे नरदेव ! प्रधानपुंभ्यां स्वप्रकृतिभ्यां सत्यमेव विश्वं करोतीति सत्यकृत् अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदमसौ सृजते

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नैसर्गिकलिङ्गानि वदन्विशिनष्टि—न्यस्तेत्यादिषड्भिः । बाल एव बाल्यात्प्रभृतीत्यर्थः । तन्मनस्कतया भगवद्गतहृदयत्वेन न्यस्तक्रीडनकः परित्यक्तबालक्रीडः कृष्णग्रहः श्रीकृष्ण एव ग्रहस्तेन गृहीत आत्मा मनोयस्य, ग्रहगृहीतवद्वर्तमान इत्यर्थः । अत एव जगदीदृशं न वेद बाह्यवस्तुविषयकचिन्तारहित इत्यर्थः ॥ ३७ ॥

एतदेव प्रपञ्चयति—आसीन इति । आसनाद्यवस्थावस्थितोपि एतान्यासनादीनि नानुसन्दधे नानुसंहितवान् तत्र हेतुर्यतो गोविन्देन भगवता परिरम्भितः संश्लिष्टः गोविन्दानुसन्धानरूपतत्परिरम्भविस्मृतदेहधर्म इत्यर्थः ॥ ३८ ॥

कचिद्गोविन्दानुसन्धानविच्छेददशायां रुदति रोदिति आर्षत्वाच्छवलुक्, इड्गुणाभावश्च. गोविन्दचिन्तया शवला व्यामिश्रा क्षुभिता चेतना बुद्धिर्यस्य तादृशः कचिद्धसति. कचित्तच्चिन्तया आह्लादो यस्य तादृश उच्चैर्गायति गोविन्दगुणानिति शेषः ॥ ३९ ॥

कचित्तच्चिन्ताह्लादएव नदति ध्वनति कचिदुत्कण्ठः कण्ठोपरिव्याप्तहर्षः विगतलज्जो नृत्यति उत्कण्ठो मुक्तकण्ठस्सन् ध्वनतीति वा कचित्तद्भावनया भगवदनुस्मृत्या युक्तस्तन्मयस्तदात्मकः स्वात्मानं तदपृथक्सिद्धत्वेन पश्यन्नपि तदपि तदनुसन्धानेन विस्मृत्य तद्रूपतापत्त्यभिमानेनानुचकारानुकरोति भगवानिव चेष्टते इत्यर्थः ॥ ४० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुणेषु शब्दादिषु शरीरस्य दान्तत्वमुपवासादिना रहितासुरः असुरस्वभावकर्मरहितः जात्यासुरः ॥ ३३ ॥

यथा भगवतीश्वर इत्यत्रापि "अन्येषां हरिसाम्यन्तु किञ्चित् साम्यमुदीरितम्" इत्यादिप्रमाणामित्यत्रापि ज्ञातव्यमिति ॥ ३४ ॥

प्रतिमानं दृष्टान्तम् ॥ ३५ ॥ ३६ ॥

कृष्णाख्यो ग्रहस्तेन वशीकृतमनाः ॥ ३७ ॥

अनुसन्दधे सस्मार ॥ ३८ ॥

तद्भावनायुक्तः तस्य श्रीनारायणस्य ध्यानोपेतः तन्मयस्तत्प्रधानः ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

असंख्येयैर्गुणैरलमिति ते वक्तुं न शक्यामित्यर्थः । अतस्तस्य माहात्म्यं सूच्यते द्योत्यते मात्रम् । यद्वा, असंख्येयैरेव बालमत्यर्थं तस्य माहात्म्यं संसूच्यते, वक्तुं शक्यत इत्यर्थः । उभयत्र च हेतुः वासुदेव इति ॥ ३६ ॥

तन्मनस्तयाकृष्टमनस्तया. न्यस्तक्रीडनकः तदनन्तरं तथैव जडवत्तत्तुल्यः ततः पश्चात् कृष्णग्रहगृहीतात्मा ग्रहेणेव कृष्णेनाविष्टः सन् जगदीदृशं न वेद न ददर्श यथा लोकाः पश्यन्ति न तथा, किन्तु तत्स्फूर्तिकरत्वेनैव ददर्शेत्यर्थः । गोविन्देन परिस्फुरता परिरम्भित इवेत्यर्थः ॥ ३७ ॥

प्रथमा चिन्ता वियोगे स्फुरिते द्वितीया संयोगे एवं वियोगे कचिद्रुदति । संयोगे हसति । वियोगे नदति उच्चैराहूयते । संयोगे वियोगे कचित्तद्भावना इति ॥ ३८—४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

महतो भगवतो गुणाः अप्राकृता धैर्यगाम्भीर्यादयः स्वभावेनैव स्थिताः कविभिर्विवेकिभिर्गृह्यन्ते एते गुणा जीवनिष्ठा न भवन्ति किन्तु भगवदीया एवेति शुद्धैर्मनआदीन्द्रियैर्विषयीक्रियन्ते इत्यर्थः । गुणानां नित्यत्वमाह—ते गुणा अधुना एतत्कालपर्यन्तं नापिधीयन्ते कालकर्मादिभिर्नाच्छाद्यन्ते एतावत्सु कालेषु गतेष्वपि प्रह्लादस्तादृग्गुणविशिष्ट एव वसुतले तथा वैकुण्ठे महावैकुण्ठे च विराजत एवेति भावः ॥ ३४ ॥

प्रतिमानं दृष्टान्तं प्रह्लादतुल्योऽयं भक्त इत्येवम् ॥ ३५ ॥

असङ्ख्येयैः सङ्ख्यातुमशक्यैरेवंगुणैस्तस्यालं कः खलूत्कर्ष इत्यर्थः । अन्ये पुरुषा गुणैरुत्कर्षयन्तां नाम न तु प्रह्लादस्तस्य तूत्कर्षहेतुरन्यद्वस्त्वन्तरं वर्तत इति भावः । तदेव किं तत्राह—माहात्म्यं सूच्यते सुष्ठु उच्यते किन्तत् वासुदेव इत्यादि. यद्वा तस्य माहात्म्यं सूच्यते तत अभिधातुमशक्यत्वाद्व्यज्यते मात्रं । कृष्णग्रहगृहीतात्मेत्याद्युत्तरग्रन्थे ग्रहादिशब्देनेति भावः । तस्य कीदृशस्येत्यपेक्षायामाह—वासुदेवे इति । नृसिंहाकारे इति केचित् प्रह्लादस्तुत्यनन्तरम् "आविर्बभूव भगवान् पीताम्बरधरो हरिः" इति वैष्णवोक्तेः कृष्णग्रहगृहीतात्मेति गोविन्दपरिरम्भितेत्यग्रिमोक्तेश्च वासुदेवे वसुदेवनन्दनाकार एवेत्यन्ये प्रह्लादस्य पूर्वोत्तरदशयोः क्रमेण वासुदेवनृसिंहनिष्ठत्वमित्यपरे नैसर्गिकी नरवन्येषामिव पूर्वजन्मकृतैः साधनैः सिद्धेत्यर्थः ॥ ३६ ॥

नैसर्गिकरतेर्लिङ्गान्याह—न्यस्तक्रीडनक इतिषड्भिः । बालोपि त्यक्तबाल्यलीलस्तन्मनस्तया कृष्णैकाग्रमनस्कत्वेन जड इवान्यैर्लक्ष्यमाणः नचान्यभक्तैरिव तेन स्वमनः कृष्णविषयकं कृतं, किन्तु कश्चित्ग्रहो लोकं द्रव्यमिव कृष्ण एव यन्मनो गृहीतवानित्याह—कृष्णेति । अत एव जगत् ईदृशं व्यवहारमयं न वेद किन्तु कृष्णमयमेवेत्यर्थः ॥ ३७ ॥

एतानि आसनवर्त्मभक्ष्यशयनीयपेयवक्तव्यानि नानुसन्धत्ते न जानाति. कुतः ? गोविंदेन परिरम्भितः अतिवत्सलेन पित्रा मात्रा वा एकाब्दिको बालो यथा प्रतिक्षणमेव परिरभ्य क्रोडस्थीक्रियते तथैव प्रह्लादो भोजनशयनादिसमयेपि भगवता आलिंग्यते इति प्रह्लाद एव पश्यति नान्य इति भावः ॥ ३८ ॥

ततश्च कचिदिति स्वबालकं स्वक्रोडस्थलाद्भूमौ निधाय गृहकृत्यार्थमन्यत्र गतायां मातरि तामनालोच्य स बालो यथा रोदिति तथैव मामधुनैव परित्यज्य मत्प्रभुः क्व गत इति तच्चिन्तया शबला व्यामिश्रा विह्वला चेतना यस्य सः रुदति रोदिति कचिद्धसतीति तदैव पुनः स्फूर्तिप्राप्तेन भगवता भो प्रह्लाद वत्स ! क्षणमात्रमेव मामनालोक्य कथमेवं रोदिषीत्युक्ते सति हसति चिरात् प्राप्तामालिङ्गतीं मातरमवलोक्य मुग्धबाल इवेत्यर्थः । तच्चिन्तेति मत्प्रभुर्मामेवं कृपया स्वदर्शनदानेन सुखयतीति चिन्तया आह्लादो यस्य सः ॥ ३९ ॥

नदतीति स्फूर्तिप्राप्तं हरिम् अतिदूरे दृष्ट्वा उत्कण्ठः उच्चीकृतकण्ठः भोः प्रह्लाद वत्स ! त्वामनालोक्याहं नैव निर्वृणोमि यतस्त्वमेव ममातिप्रिय इत्युक्तस्सन् आनन्दातिशयेन विक्षिप्त-

क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥ ४१ ॥
स उत्तमश्लोकपदारविन्दयोर्निषेवयाऽकिञ्चनसङ्गलब्धया ।
तन्वन्परां निर्वृतिमात्मनो मुहुर्दुस्सङ्गदीनान्यमनःशमं व्यधात् ॥ ४२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एष विलज्जो नृत्यति तदैव स्फूर्तिभङ्गे सति तद्विरहखेदाधिक्येन तद्भावनातिशययुक्तः उन्मादसञ्चारिप्राबल्येन अहमेव हरिरिति तन्मयस्सन् तल्लीलां रामकृष्णाद्यवतारगतामपि अनुचकार अनुकृतवान् ॥ ४० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्यसनेषु आपत्सु नोद्विग्नचित्तः श्रुतेषु पारलौकिकेषु दृष्टेषु ऐहिकेषु च गुणेषु विषयेषु यतोऽवस्तुदृक् अनित्यत्वदर्शिस्ततो निस्पृहः दान्ताः वशगाः इन्द्रियादयो यस्य सः ॥ ३३ ॥

यथा भगवति तथा यस्मिन् ये महान्तो गुणाः ते कविभिर्विवेकिभिः स्वस्मिन् अधुनापि मुहुर्गृह्यन्ते पुनःपुनः संगृह्यन्ते ते चात्मनि न धीयन्ते अविवेकिभिरात्मनि धारयितुं न शक्यन्ते इत्यर्थः ॥ ३४ ॥

हे नृप ! साधूनां गाथायां गुणकथायाः सदसि समाजे रिपवः सुरा अपि यं प्रह्लादं प्रतिमानमुपमानं प्रकुर्वंति अमुकः साधुः प्रह्लादसम इत्येवं वर्णयन्तीत्यर्थः । तर्हि भवादृशाः साधवः अन्ये रिपुभिन्नाः स्वकीयाश्च प्रतिमानं प्रकुर्वंतीति किमुत ॥ ३५ ॥

यस्य वासुदेवे भगवति नैसर्गिकी स्वभाविकी रतिः प्रीतिः तस्य असङ्ख्येयैर्बहुभिर्गुणैः पर्याप्तमिति तस्य माहात्म्यं सूच्यते द्योत्यते गुणास्तु मुख्या वासुदेवे रतिरेव तत्रैव सर्वे गुणाः सन्ति तदभावे सर्वे गुणा दोषा एवेति भावः । उक्तं चैतच्चतुर्थे स्कन्धे "किं जन्मभिस्त्रिभिर्वेह शौक्लसावित्रयाज्ञकैः" इत्यादिना ॥ ३६ ॥

तां नैसर्गिकीं वासुदेवे रतिं प्रह्लादस्य वर्णयति भगवान्नारदः न्यस्तक्रीडनक इति षड्भिः । तन्मनस्तया वासुदेवविषयकचित्तत्वेन ॥ ३७ ॥

गोविंदेन परिरम्भितः एतानि आसनपर्यटनादीनि नानुसंधत्त न बुबुधे ॥ ३८ ॥

वैकुण्ठचिन्तया शबला विह्वला चेतना यस्य रुदति रोदिति तस्य गोविन्दस्य चिन्तया ध्यानेनाह्लादो यस्य सः ॥ ३९ ॥

क्वचिदुत्कण्ठः उच्चीकृतकण्ठस्सन् नदति ध्वनति क्वचिच्च तन्मयो गोविन्दमयः सन् अनुचकार तल्लीलां स्वयं चकार ॥ ४० ॥

---

भाषा टीका ।

व्यसन प्राप्त होने पर जिसका चित्त उद्विग्न नहीं होता और सदा निस्पृह रहता तथा दृष्ट श्रुत ( देखे सुने हुए ) विषय को कुछ वस्तु नहीं समुझता था, इन्द्रिय प्राण शरीर और बुद्धिका दमन करनेवाला सदा प्रशांत कामना वाला और आसुर भाव से रहित था ॥ ३३ ॥

हे राजन् ! जिस प्रल्हाद में बडे २ गुण थे जिन गुणों को बडे २ महात्मा लोग ग्रहण करते हैं वे गुण प्रल्हाद के अब भी तिरोहित नहीं है जैसे कि भगवान श्रीमन्नारायण में ॥ ३४ ॥

हे नृप ! साधु कथा प्रसंगवाली सभा में वैरी जो देवता लोग हैं वो भी जिस प्रल्हादको उत्तम पुरुषों का दृष्टांत बनाते हैं फिर आप सदृश विष्णुभक्तों का तो क्या ही कहना ॥ ३५ ॥

उसके असंख्येय गुणों को तो कहां तक कहैं पर उसके माहात्म्यमात्र की सूचना करते हैं कि जिसकी भगवान वासुदेव के विषैं स्वाभाविक प्रीति थी ॥ ३६ ॥

जो कि कृष्ण में मन लगने से जड़ के तरह बालक पने में भी खिलोनों को छोड बैठा, और कृष्णरूप ग्रह से गृहीत हुआ मन जिसका ऐसा प्रल्हाद, जगत् कैसा है यह भी नहीं जानता हुआ ॥ ३७ ॥

बैठे चलते सोते खाते पीते बोलते में भी गोविन्द में पूर्ण रीति से चित्त लगजाने से प्रल्हाद को इन सब बातों का अनुसंधान नहीं रहता था ॥ ३८ ॥

वैकुंठ भगवान की चिन्ता से क्षुभित होगई चेतना जिसकी ऐसा प्रल्हाद कभी रोने लगता कभी हंसने लगता कभी परमात्मा की चिन्ता के आल्हाद से गाने लगता ॥ ३९ ॥

किसी समय ऊंचे स्वर से नाद करने लगता कभी निर्लज्ज होकर नांचने लगता किसी समय हरिभावना युक्त होकर तन्मय होकर भगवान का अनुकरण करने लगता ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

संस्पर्शस्तद्भावापत्तिस्तेन निर्वृतः अस्पन्दः स्थिरो यः प्रणयस्तेन य आनन्दस्तेन यत्सलिलं तेन युक्ते आमीलिते ईषन्निमीलिते ईक्षणे यस्य सः ॥ ४१ ॥

आत्मनः परां निर्वृतिं तन्वन्दुस्सङ्गेन दीनस्यान्यस्यापि मनः शमं शान्तं व्यधात् ॥ ४२ ॥

तस्मिन्महाभागवते महाभागे महात्मनि ।
हिरण्यकशिपूराजन्नकरोदघमात्मजे ॥ ४३ ॥

॥ युधिष्ठिर उवाच ॥

देवर्ष एतदिच्छामो वेदितुं तव सुव्रत ! ।
यदात्मजाय शुद्धाय पिताऽदात्साधवे ह्यघम् ॥ ४४ ॥

(१) पुत्रान् विप्रतिकूलान् स्वान् पितरः पुत्रवत्सलाः ।
उपालभन्तो शिक्षार्थं नैवाघमपरो यथा ॥ ४५ ॥

किमुतानुवशान् साधूंस्तादृशान् गुरुदेवतान् ।
एतत्कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो ! ॥
पितुः पुत्राय यद्द्वेषो मरणाय प्रयोजितः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां सप्तमस्कन्धे प्रह्लादचरिते
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अघं द्रोहमकरोत् ॥ ४३ ॥

प्रथमाध्यायान्ते पृष्टमेवार्थमतिविस्मयेन पुनः पृच्छति—देवर्षे इति । तत्र त्वत्वस्तववाक्यमिति का साभवेऽघमदात् साधे द्रोहं कृतवानिति यदेतद्वेदितुं ज्ञातुमिच्छामः ॥ ४४ ॥

उपालभन्ते आक्षिपन्ति अघन्तु नैव कुर्वन्ति अपरः शत्रुरिव ॥ ४५ ॥

अनुवशाननुकूलान् साधूंस्तरागरोषान् गुरुः पितैव देवता येषां तानुद्दिश्याघं न कुर्वन्तीति किमु वक्तव्यमित्यर्थः । पुत्राय पुत्रमुद्दिश्य पितुर्द्वेषः पित्रा कृतोद्वेषः पुत्रस्य मरणार्थं प्रयोजितः प्रवर्तित इति यदेतत्कौतूहलं विधमापाकुरु यद्वा यद्यस्मात्पुत्राय यो द्वेषः स पितुर्मरणाय प्रयोजितोऽत एतत्कौतूहलं विधमेत्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

क्वचिच्च तत्स्पर्शेनाऽविच्छिन्नानुध्यानेन निर्वृतः सुखितः अस्पन्दः स्थिरो यः प्रणयः स्नेहस्तेन च आनन्दस्तेन यत्सलिलं तेनाऽऽमीलिते ईषन्मीलिते ईक्षणे यस्य उत्पुलकः उदञ्चितरोमा तूष्णीमास्ते ॥ ४१ ॥

स प्रह्लादः अकिञ्चनसङ्गो निरुपाधिकस्नेहस्तेन लब्धया उत्तमश्लोकस्य भगवतः पदारविन्दयोः निषेवया मुहुर्मुहुरात्मनः स्वस्य परां निर्वृतिमानन्दं तन्वन् वितन्वन्, अत्र इत्यार्षत्वाल्लुप्तषष्ठीकं पृथक् पदम्, यद्वा, तत एव सविशेषणस्यापि समासः विषयासङ्गेन दीनस्य मनसः शमं शान्तिं रागादिराहित्यं व्यधाच्चक्रे कुःसङ्गदीनस्येति विशेषणं लोकपरिपाटीकृतं न तु तस्य कदाचिदपि विषयासक्तमभून्मन इति भावः ॥ ४२ ॥

हे राजन् ! तस्मिन्नेवंभूते महाभागवतश्रेष्ठे महाविवेकिनि महात्मन्युक्तविधमाहात्म्ये तत्राप्यात्मजे हिरण्यकशिपुरघं द्रोहमकरोत् ॥ ४३ ॥

एवंविधस्य द्रोहानर्हत्वशङ्कया पृच्छति युधिष्ठिरः—देवर्ष इति । हे देवर्षे ! एतद्वेदितुं ज्ञातुमिच्छामः, किन्तत् ? हे सुव्रत ! शुद्धाय निरपराधाय साधवे महाभागवताय तत्राप्यात्मजाय अनेन द्रोहानर्हविषयत्वमुक्तम्. पितेत्यनेन द्रोग्धृत्वानर्हत्वम् अघं द्रोहमधाच्चक्रे इत्येतत् ॥ ४४ ॥

उक्तविशेषणलब्धार्थमेव विशदयति–पुत्रेष्विति । प्रतिकूलेषु पुत्रेषु विषयभूतेषु पुत्रवत्सलाः पितरः शिक्षार्थं केवलमुपालभन्ते आक्षिपन्ति अपरे यथा शत्रवस्तथाघं द्रोहं नैव कुर्वन्ति. प्रतिकूलानपि पुत्रान् केवलं शिक्षार्थमुपालभन्ते न तेभ्यो द्रुह्यन्ति, किम्पुनरनुकूलान् साधून् गुरुः पितैव दैवतं येषां तानुपालभन्ते न तु तेभ्यो द्रुह्यन्ति इति भावः ॥ ४५ ॥

अतो हे ब्रह्मन् ! अस्माकमेतत्कौतूहलम् एतत्प्रश्नकौतूहलं विधम अपनय हे प्रभो ! पुत्राय यः पितुर्द्वेषः स मरणाय पितुर्मरणाय

---

( १ ) पुत्रेषु प्रतिकूलेषु. इति पाठान्तरम्. श्री-वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

प्रयोजितः प्रयोजकोऽभूदिति यदेतत्प्रश्नकौतूहलमित्यन्वयः पितुः पुत्रविषयकद्वेषः स्वस्यैव मरणप्रयोजकः कथमभूदित्येवं विप्रश्नविषयकौतूहलं विधमेत्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

स्पर्शेषु विषयेषु स्पृहारहितः अस्पन्दप्राणः प्राणचेष्टारहितः आनन्दसलिलेन सन्तोषाश्रुजलेन निमिलेन किञ्चिन्निमीलितनेत्रः ॥ ४१ ॥

अकिञ्चनानां महतां सतां सेवालक्षणसङ्गेन प्राप्तया ॥ ४२ ॥

अघं मरणलक्षणं व्यसनम् ॥ ४३ ॥

"विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि" इतिस्वपृष्टं कथान्तरासक्तया नारदेनापरिहृतम् जानन् राजा युधिष्ठिरः पुनरपि ज्ञानसकरोदयमात्मज इतिप्रसक्तं श्रुत्वा तदेव पृच्छति--देवर्ष इति। पुत्रस्य मरणकारणमासुरकर्म न तु शास्त्रीयमितिज्ञापनाय साधवे अघमिति संहिताकार्यं न कृतम् ॥ ४४ ॥

अपरे शत्रवः ॥ ४५ ॥

विधम परिहर पुत्राय प्रयोजितो विद्वेषः पितुर्मरणायाभूदिति यत्तस्मात्कौतूहलमिति ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

संयोगे क्वचिदुत्पुलकइति । संस्पर्शः कृपामयतत्कर्त्तृकालिङ्गनस्फूर्त्तिः ॥ ४१ ॥

दुन्त्यपाठे स्वसमं स्वान्तःकरणतुल्यं व्यधात् ॥ ४२ ॥

महाभागवतस्वलक्षणं पूर्वमेव दर्शितम. महान् भागो भाग्यं श्रीनारदकृपारूपं यस्य महान् पूज्य आत्मा धैर्यगाम्भीर्यादियुक्तः स्वभावो यस्य ॥ ४३ ॥ ४४ ॥

पुत्रानिति सार्द्धकम् ॥ ४५--४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुर्थोऽध्यायः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

क्वचिदुत्पुलक इति क यामि कुत्र प्रभुं प्राप्स्यामीति कदाचित्तद्विच्छेददुःखेन मुद्रितनेत्र अकस्मात् स्वहृदय एव तमालोक्य तत्पाणिस्पर्शेन निर्वृत उत्पुलकः न विद्यते स्पन्दनो यस्य सः प्रणयेनानन्दसलिलं ययोस्तथाभूते ईषन्मुद्रिते ईक्षणे यस्य स च स च सः ॥ ४१ ॥

ननु, तस्य हिरण्यकशिपुप्रभृतिदुःसङ्गत्वे कथं स्थिरा भक्तिस्तत्र प्रह्लादस्य तस्य सङ्गेनान्येपि दुःसङ्गिनस्ततसहचरबालाः कृतार्था बभूवुः कथं तस्यैव दुःसङ्गाशङ्क्याह--सइति। दुस्सङ्गदीनस्यान्यस्यापि मनः शमं "शमो मन्निष्ठता बुद्धेः" इति भगवद्वचनात् भगवन्निष्ठमकरोत् ॥ ४२ ॥

अघं द्रोहम् ॥ ४३ ॥

प्रथमाध्यायान्ते पृष्टमेवार्थमतिविस्मयेन पुनः पृच्छति देवर्ष इति। तव त्वत्तः अघं दुःखम् ॥ ४४ ॥

नैव अघं प्रापयन्ति अपरः अनुवशान् अनुकूलान् ॥४५॥

कुतूहले भवं कौतूहलं सन्देहं विधम अपाकुरु सन्देहः कः पुत्राय पुत्रं हन्तुं पितुर्द्वेषः यत् यो द्वेषः मरणाय स्वस्य मरणार्थमेव प्रकर्षेण योजितः ॥ ४६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
सप्तमेतु चतुर्थोयं सङ्गतः सङ्गतस्सताम् ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

उत्पुलको जातरोमाञ्चः संस्पर्शेन ध्यानदृष्टभगवच्चरणसंस्पर्शेन निर्वृतः सुखितस्तूष्णीमास्ते अस्पन्दप्रणयेन अचलप्रेम्णा च आनन्दस्तेन यत्सलिलं तेन युक्ते आमीलिते ईषन्मुद्रिते ईक्षणे यस्य सः ॥ ४१ ॥

अकिञ्चनानां भगवदनन्यशरणानां सङ्गमेन लब्धया उत्तमश्लोकस्य पुण्यकीर्त्तेर्हरेः पदारविन्दयोर्निषेवया आत्मनः परां निर्वृतिं परं सुखं तन्वन् दुःसङ्गेन दीनस्येतरस्यापि मनः शमं भगवन्निष्ठं व्यधादकरोत् ॥ ४२ ॥

अघं पापं द्रोहमित्यर्थः ॥ ४३ ॥

यत् शुद्धाय अघमवान् शुद्धे द्रोहं कृतवानित्यर्थः। एतत् तव त्वत्तः वेदितुमिच्छामः ॥ ४४ ॥

पुत्रवत्सलाः पितरो विप्रतिकूलानपि शिक्षार्थमेवोपालभन्ते आक्षिपन्ति अपरः शत्रुर्यथा तथा अघं नैव कुर्वन्ति किमुत वाच्यमनुवशत्वादिगुणयुक्तान्प्रति अघं न कुर्वन्तीति ॥ ४५ ॥

पुत्राय पुत्रं हन्तुं यो द्वेषः स पितुर्मरणाय प्रयोजितः, पित्रेति शेषः। इत्येतत्कौतूहलं विधम अपाकुरु ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुर्थाध्यायार्थप्रकाशः ॥ ४ ॥

---

भाषा टीका।

किसी समय स्फूर्ति प्राप्त भगवत्स्पर्शानुभवसे आनंदित होकर रोमांचित होजाता और निश्चल होकर प्रेम से हुआ जो आनंदबाष्प तिससे किञ्चित् निमीलित है नेत्र जिसका ऐसा होकर तूष्णीं भाव को प्राप्त होजाता ॥ ४१ ॥

अकिंचनों के संग से प्राप्त हुई जो गोविन्द चरणारविन्द की सेवा उससे अपने आनंद की परा काष्ठा का विस्तार करता हुआ, बारंबार दुःसंग से दीनजनों के मन की भी शांति करता हुआ ॥ ४२ ॥

हे राजन् ! उस वडभागी महात्मा महा भागवत अपने पुत्र प्रल्हाद में हिरण्यकशिपुने ऐसा पाप क्यों किया ॥ ४३ ॥

युधिष्ठिरउवाच ।

युधिष्ठिरजी बोले, कि—हे देवर्षे ! हे सूत ! मै आप से इतने जानने की इच्छा करता हूं कि परमसुशील अपने पुत्रको पिताने कैसे द्रोह किया ॥ ४४ ॥

पिता लोग पुत्रों के विषय में ऐसे वत्सल होते हैं कि अत्यंत प्रतिकूल भी अपने पुत्रों को शिक्षा ही लिये कुछ आक्षेप करते हैं, शत्रुके तरह दुष्ट अभिप्राय वाले नहीं होते हैं ॥ ४५ ॥

फिर गुरु लोगों को देवता के सदृश मानने वाले अपने वशंवद सुशील प्रल्हाद सदृशों पर क्या ही कहना, हे ब्रह्मन् यही मुझे बड़ा कौतूहल है कि पिताने पुत्र के लिये मरणार्थ द्वेष किया इस कौतूहल को आप दूर करो ॥ ४६ ॥

इति श्रीमद्भागवत महापुराण सप्तमस्कन्ध
चतुर्थोध्याय की भाषा टीका समाप्त ॥ ४ ॥

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे चतुर्थोध्यायः ॥ ४ ॥

—:*:—

## ॥ पञ्चमोऽध्यायः ॥

नारद उवाच ।

पौरोहित्याय भगवान् वृतः काव्यः किलासुरैः ।
शण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके ॥ १ ॥
तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् ।
पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् ॥ २ ॥
यत्तत्र गुरुणा प्रोक्तं शुश्रुवेऽनुपपाठ च ।
न साधु मनसा मेने स्वपरासद्ग्रहाश्रयम् ॥ ३ ॥
एकदाऽसुरराट् पुत्रमङ्कमारोप्य पाण्डव ! ।
पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान् ॥ ४ ॥

प्रह्लाद उवाच ।

तत्साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ।
हित्वात्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत ॥ ५ ॥

नारद उवाच ।

श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमाहिताः ।
जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ॥ ६ ॥
सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः ।
विष्णुपक्षैः प्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा ॥ ७ ॥
गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः ।
प्रशस्य श्लक्ष्णया वाचा समपृच्छन्त सामभिः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चमे गुरुतोऽधीतं त्यक्त्वा विष्णुस्तुतौ रतम् ।
घातयन्विविधोपायैः सुतं दैत्यो न चाशकत् ॥ १ ॥

भगवद्भक्तिरेव विद्वेषे कारणमिति वक्तुमाह--पौरोहित्यायेत्यादिना । काव्यः शुक्रः अतस्तस्य सुतौ दैत्यराजगृहान्तिके न्यवसतामितिशेषः ॥ १ ॥

पाठ्यान्पठनीयादीन् पाठ्यानसुरबालकानितिवान्वयः ॥ २ ॥

अनु श्रवणानन्तरं तथैव पपाठ च किन्तु तत्साधु न मेने तत्र हेतुः स्वः परः इत्यसद्ग्रहो मिथ्याभिनिवेशस्तदाश्रयो यस्य तत् ॥ ३ ॥ ४ ॥

हे असुरवर्य ! असद्ग्रहादहं ममेति मिथ्याऽभिनिवेशाद्धेतोः समुद्विग्ना विषण्णा धीर्येषां ते वनं गतः सन्हरिमाश्रयेतेति यत्तदेवाहं साधु मन्ये कथम्भूतं गृहम् आत्मपातमात्मनोऽधःपातनिमित्तम् कुतः अन्धकूपवन्मोहावहम् ॥ ५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

परपक्षे विष्णौ समाहिताः परिनिष्ठिताः हासे हेतुः बुद्धिरिति ॥ ६ ॥

विष्णुपक्षैर्भागवतैर्हेतुभूतैः ननु, त्वद्गृहे कुतस्तेषां प्रवेशः सत्यम् तथाऽपि प्रतिच्छन्नैर्वेषान्तरेण छन्नः ॥ ७ ॥

दैत्यैर्गृहमानीतम् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

एवमापृष्टद्वेषनिमित्तस्तद्वृत्तान्तावबुपोद्घातमाह भगवान्नारदः—पौरोहित्यायेत्यादिना । भगवान् काव्यः शुक्रः पौरोहित्याय पुरोहितकर्मकर्तुमसुरैर्वृतः, किलेति प्रसिद्धिं द्योतयति तस्य काव्यस्य सुतौ शण्डामर्काख्यौ दैत्यराजस्य हिरण्यकशिपोः गृहसमीपे आस्तामितिशेषः ॥ १ ॥

तौ च शण्डामर्कौ दैत्यराजेन प्रापितं नीतिशास्त्रपठनार्थं प्रापितं प्रह्लादमन्यांश्चासुरबालकांश्च पाठ्यान् दण्डनीत्यादीन् पाठयामासतुः पठनं कारितवन्तौ अत्र नयकोविदमिति क्रियाविशेषणं यथा नयकोविदाः नीतिशास्त्रनिपुणाभवन्ति तथा पाठयामासतुरिति ॥ २ ॥

तत्र एवं स्थिते प्रह्लादो यद्गुरुणा प्रोक्तं तच्छुश्रुवे श्रुतवान् अनुपठितवांश्च परन्तु तत्प्रोक्तं मनसा साधुयथातथा न मेने तत्र हेतुं वदन् प्रोक्तं विशिनष्टि—स्वपरासद्ग्रहाश्रयम् अयं स्वः स्वकीयो मित्रम् अयन्तु परः शत्रुरित्येवंरूपो योऽसद्ग्रहो वृथाग्रहरूपोऽभिमानस्तस्याश्रयं हेतुभूतम् ॥ ३ ॥

एवं स्थिते हे पाण्डव ! कदाचिदसुरराट् पुत्रं प्रह्लादमङ्कमारोप्योत्सङ्गे निधाय हे वत्स पुत्र, भवानाचार्यप्रोक्तेषु मध्ये यत्साधु मन्यते तत्कथ्यताम्. इत्येवं पप्रच्छ ॥ ४ ॥

एवं दैत्येन पृष्टः प्रह्लादस्तमाह—तदित्येकेन । हे असुरवर्य दैत्यराज ! असद्ग्रहात् देहात्माभिमानस्वतन्त्राभिमानतन्मूलशब्दादिविषयाभिनिवेशाविरूपादसद्ग्रहाद्धेतोः सदा नित्यं समुद्विग्ना नितरां भीता धीर्येषां तेषां देहिनां कुत्सितदेहधारिणामात्मपातं पतन्त्यनेनेति पातम् आत्मनः अधःपतनहेतुमन्धकूपतुल्यं गृहं त्यक्त्वा वनमरण्यं प्रविष्टो हरिम् आश्रितबन्धेहरं भगवन्तमाश्रयेतेति यत्तदेव साधु मन्ये इति. हित्वेतिपदेन हेयसंक्षेपः हरिमाश्रयेतेत्यनेन उपादेयतत्त्वतदनुष्ठानसंक्षेपः वनं गतइति विविक्तदेशोपलक्षणम् ॥ ५ ॥

एवमुक्तोदैत्यराजः किमाहेत्याह देवर्षिः—श्रुत्वेति । परपक्षसमाहिताः परपक्षे विष्णौ समाहिताः परिनिष्ठिताः पुत्रस्य प्रह्लादस्य गिरः श्रुत्वा दैत्यो जहास हासपूर्वकमुवाचेत्यर्थः । तदेवाह—बालानां बुद्धिः परबुद्धिभिः परस्मिन् शत्रौ विष्णौ बुद्धिर्येषां तैर्भिद्यते अन्यथाक्रियते विपरीताक्रियते इत्यर्थः ॥ ६ ॥

नूनं गुरुगेहे प्रतिच्छन्नैर्विष्णोर्भक्तैर्द्विजातिभिः ब्राह्मणैः अयं बालो भिद्यते विपरीतबुद्धिः क्रियते अतोऽस्य बालस्य बुद्धिर्यथा नभिद्येत तथा सम्यग्विधार्यतां विचार्यतामित्यर्थः ॥ ७ ॥

ततो दैत्ययाजकाः दैत्यपुरोहिताः स्वगृहम्प्रति दैत्यभटैरानीतम् प्रापितं प्रह्लादम् आहूय प्रशस्य प्रस्तुत्य सामोक्तिभिः श्लक्ष्णया मृद्व्या उक्त्या च समपृच्छन् ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हिरण्यकशिपुप्रह्लादसम्वादच्छलेन भक्तिस्वरूपं हरेर्निरतिशयस्वातन्त्र्यञ्च निरूपयत्यस्मिन्नध्याये—काव्यः शुक्रः शण्डश्च मर्कश्च शण्डामर्कौ तस्य शुक्रस्य दैत्यराजगृहान्तिके न्यवसतामितिशेषः ॥ १ ॥

राज्ञा हिरण्यकशिपुना ॥ २ ॥

अपाठस्य विशेषणभूतेन हेत्यनेन सूचितं हेतुमाह—नेति । असाधुत्वे किङ्कारणमत्राह—स्वरूपेति, "स्वातन्त्र्यात्स्वइतिप्रोक्तः" इत्यतःस्वस्य स्वतन्त्रस्य हरेरूपस्यासत्त्वं शून्यत्वं गृह्णातीति निराकारो हरिरिति यः पक्षः स आश्रयो यस्य तत्तथानिराकारपक्षविषयत्वादित्यर्थः । प्रपञ्चस्वरूपस्यासद्ग्रहः शून्यत्वप्रतिपादकः शून्यवादः समाश्रयो यस्य तत्तथा अद्वैतविषयत्वादित्यर्थइतिवा जीवपरस्वरूपयोरसत्पृथगभावं गृह्णातीति स्वरूपासद्ग्रहः जीवपरमात्मानावभिन्नाविति यः सिद्धान्तः स आश्रयः यस्य तत्तथा अद्वैतविषयत्वादित्यर्थं इति वा, स्वरूपासद्ग्रहः औत्पत्तिकदुराग्रहोऽवैष्णवपक्षपातः स आश्रयो यस्य तत्तथा वैष्णवसिद्धान्तविरुद्धत्वादित्यर्थं इति वा विन्यासभेद एवायन्तात्पर्यतस्त्वेकएवेति ॥ ३ ॥ ४ ॥

हे असुरवर्य ! असद्ग्रहाद्विषयाभिनिवेशात् समुद्विग्नधियां परवशीकृतबुद्धीनां देहिनां तत्साधु संसारनिर्मूलसाधनं मन्य इत्यन्वयः । किं तदिति, तत्राह—हित्वेति. आत्मपातं स्वस्य निरयपातम् अन्धमज्ञानं यस्तस्य कूपं निधानस्थानं गृहं हित्वा वनं सज्जनसङ्गमलक्षणं गतः ॥ ५ ॥

सज्जनशिक्षार्थं प्रह्लादेन तत्त्वमुक्तं न तु तं ग्राहयितुं तस्यासुरावेशेन दुराग्रहगृहीतत्वात्तत्फलमाह—श्रुत्वेति । परिहासः फलं परबुद्धिभिः प्रतिपक्षबुद्धिभिःपरपक्षसमीहिताः पूर्वपक्षविषयत्वेन प्रवृत्ताः ॥ ६ ॥

पुत्रस्नेहेनाभिमतोयं न हासः किं त्वनाभिमत एवेत्यभिप्रेत्याह—सम्यगिति । विधार्यतामवधार्यतां विष्णुपक्षः प्रतिच्छन्नो येषां ते तथा तैर्विष्णुसिद्धान्तमभिगृह्यास्थितैरित्यर्थः ॥ ७ ॥

अवशवशीकरणाय चत्वार उपाया विहितास्तत्र द्विजातीनां सामोपाय एव श्रेयानिति दर्शयितुं परकृतबुद्धिभेदकत्वं ज्ञातुं तत्रापि योग्यानां भगवत्तत्त्वविषयज्ञाननिश्चयाय च दैत्यभयाच्च दैत्ययाजकाः प्रह्लादमपृच्छन्नित्याह । सूदानीति—सामाभिर्वचनैः ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १——१० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गुरुणाऽध्यापितः पित्रा पृष्टः कृष्णं स्तुवन् सुतः ।
पञ्चमे दिग्गजाद्यैस्तु हतोऽपि स्वस्थ्यराजत ॥ ० ॥

प्रह्लादस्य भक्तिरेव विद्वेषकारणमिति वक्तुमाह-पौरोहित्यायेत्या दिना । काव्यः शुक्रः अतस्तस्य सुतौ तत्र न्यवसतामिति शेषः ॥ १ ॥ २ ॥

यत् दण्डनीत्यादिकं तत् साधु न मेने कुतः ? स्वः पर इत्यसद्ग्रहं दुरभिनिवेशमेव आ सम्यक्प्रकारेण श्रयते इति तत् ॥ ३॥

काठिनपदार्थानां प्रश्ने बालस्यास्य क्षोभो भविष्यतीति मत्वा प्राह-यद्भवान् साधु मन्यते पठितानां वस्तूनां मध्ये साधु अभ्यस्तीकृतं यत् त्वं जानासि मदग्रे वक्तुञ्च शक्नोषि तदेव वदेति हिरण्यकशिपोरभिप्रायः ॥ ४ ॥

प्रह्लादस्तु तदभिप्रायं ज्ञात्वापि जगत्यस्मिन् जिज्ञास्यानां मध्ये भवान् किं वस्तु साधु मन्यते इति बुद्ध्वा विचार्य्य स्वसम्मतीकरोतीति मां पृच्छति चेदस्य समुचितमुत्तरं श्रृणित्वाह-तदिति । हे असुरवर्य्य ! असद्ग्रहात् अहं ममेति मिथ्याभिनिवेशात् उद्विग्नधियां जनानां तदेव साधुमन्ये. किं तत् ? आत्मपातहेतु गृहं त्यक्त्वा वनं गतस्सन् यद्धरिमाश्रयेतेति, अत्र यत् हरिमाश्रयेत तदेव हरिचरणाश्रयणं साधु मन्ये गृहस्थितोपि स एव गृहमन्धकूपं हित्वा वनं गतः अन्यथा वनं गतोऽपि गृहमन्धकूपमेव श्रित इति च व्याचक्षते ॥ ५ ॥

परपक्षे शत्रुपक्षे विष्णौ समाहिताः परिनिष्ठिताः जहासेति बालोऽयं श्रो यद्धारयति तदेव धत्ते अस्य को दोषस्तदद्यारभ्य ना रदाद्या वैष्णवा नात्र प्रवेशनीया इत्यादिदेशेति भावः ॥ ६ ॥

तदपि गुरुगेह एव ते नैवं वक्तव्या इत्याह-विष्णुपक्षैरिति ॥७॥

प्रश्रय श्लक्ष्णयेत्यन्यथा बालोऽयं भयेन स्वोपदेशकं वैष्णवं न वक्ष्यतीति भावः ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवद्भजनतः प्रह्लादः पित्रा गजादिभिर्घातितोऽपि भगवदनुग्रहान्न मृत इति पञ्चमे वर्णयति, भगवद्भजनरतं पुत्रं दृष्ट्वा हिरण्यकशिपुस्तं प्रति विद्वेषं कृतवानिति वक्तुमाह-पौरोहित्याये त्यादि । काव्यः शुक्रः तस्य सुतौ दैत्यराजगृहान्तिके न्यवसतामिति शेषः ॥ १ ॥

तौ प्रह्लादमन्यांश्चासुराणां बालकान् पाठ्यान् पाठयामासतुः ॥ २ ॥

दण्डनीत्यादिकं गुरुणा प्रोक्तं तत् सुश्रुवे श्रुतवान् अनुश्रवणानन्तरं पपाठ च पठितवांश्च मनसा तु साधु न मेने यतः स्वपररूपो योऽसद्ग्रहो असदभिनिवेशस्तदाश्रयम् ॥ ३ ॥ ४ ॥

असद्ग्रहात् नित्यस्वरूपो जीवः तद्विपरीतोऽनित्यो देहोऽसत्तस्मिन् यो ग्रहोऽहमित्यभिनिवेशस्तस्मादनात्मन्यात्मभ्रमात् सदा समुद्विग्नधियाम् आत्मनः पातो यस्मिन् तमन्धकूपं गृहं हित्वा वनं गतस्सन् यद्धरिमाश्रयेत तत्साधु मन्ये ॥ ५ ॥

परपक्षे विष्णौ समाहिताः सम्यगाहिताः संयोजिताः पुत्रगिरः श्रुत्वा बालानां बुद्धिः परेषां बुद्धिभिर्भिद्यते इति मत्वा जहास ॥ ६ ॥

गुरुगेहे बालः सम्यग्विशोध्यताम् अस्मद्गृहात्प्रतिच्छन्नैर्गुप्तलक्षणैर्विष्णुपक्षैर्वैष्णवैर्द्विजातिभिर्यथाऽस्य धीर्न भिद्येत ॥ ७ ॥

दैत्ययाजकाःगृहमानीतं प्रह्लादं श्लक्ष्णया मधुरया वाचा प्रशस्य सामभिः प्रियवाक्यैः समपृच्छन्त ॥ ८ ॥

---

भाषा टीका ।

श्रीविश्वम्भरात्मजतनयाकुचकाश्मीरमुद्रितोरसे नमः ॥

नारद उवाच

नारदजी बोले, कि—असुर लोगों ने भगवान् श्रीशुक्राचारीजी को पुरोहित किये थे, उनके शंडा मर्क नामक दो पुत्र दैत्यराज के महलों के समीप रहते थे ॥ १ ॥

वो दोनों राजा के भेजे हुए, नीतिनिपुण प्रह्लाद नामक बालक को पढाते थे तथा और भी पढने के योग्य छोटे २ असुरबालकों को पढाते थे ॥ २ ॥

जो कुछ वहां पांडे ने पढाया उसको सुना भी और पढा भी परंच अपना पराया झूठेआग्रहवाला वह पढना प्रल्हाद को मन से अच्छा न मालूम हुआ ॥ ३ ॥

हे पांडव ! एक दिन दैत्यराज ने अपने पुत्र को गोद में बैठाकर पूंछा कि हे वत्स ! तुम क्या अच्छा मानते हो ॥ ४ ॥

प्रल्हाद उवाच ॥

प्रल्हाद बोला, कि—हे असुरवर्य ! संसार से सदा उद्विग्नबुद्धिवाले प्राणियों को तो मैं यही अच्छा समझता हूं कि अपने पतन होने का गृह रूप अंधकूप को छोडकर वन में जाकर हरि का आश्रयण करे ॥ ५ ॥

नारदउवाच ॥

नारदजी बोले, कि—पुत्र की वाणी शत्रु के पक्ष में निष्ठावाली सुनकर दैत्य हँसा और बोला कि-बालकों की बुद्धि पराये की बुद्धि से भेद को प्राप्त होजाती है अर्थात् बिगड जाती है ॥ ६ ॥

इसी से गुरु के गृह में लेजाकर बालक को अच्छी तरह शिक्षा दो कि जिससे छिपे हुए विष्णु के पक्ष वालों से इस की बुद्धि न बिगडे ॥ ७ ॥

दैत्य पुरोहितों ने घर पर आये हुए प्रल्हाद को बुलाकर मधुरवाणी से बड़ाई देकर शांति से पूंछा ॥ ८ ॥

वत्स ! प्रह्लाद ! भद्रं ते सत्यं कथय मा मृषा ।
बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ ९ ॥
बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत् ।
भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन ! ॥ १० ॥

प्रह्लाद उवाच ।

(१) स्वः परश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ।
विमोहितधियां दृष्टस्तस्मै भगवते नमः ॥ ११ ॥
स यदाऽनुव्रतः पुंसां पशुबुद्धिर्विभिद्यते ।
अन्य एष तथाऽन्योऽहमिति भेदगताऽसती ॥ १२ ॥
स एष आत्मा (२) स्वपरेत्यबुद्धिभिर्दुरत्ययानुक्रमणो निरूप्यते ।
मुह्यन्ति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥ १३ ॥
यथा भ्राम्यत्ययो ब्रह्मन्स्वयमाकर्षसन्निधौ ।
तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥ १४ ॥

नारद उवाच ।

एतावद्ब्राह्मणायोक्त्वा विरराम महामतिः ।
तं निर्भर्त्स्याथ कुपितः स दीनो (३) राजसेवकः ॥ १५ ॥
आनीयतामरे ! वेत्रमस्माकमयशस्करः ।
कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

बालान्सर्वानति अतिक्रम्य तुभ्यं तव ॥ ९ ॥ १० ॥

अहो मायामोहिताः भवन्तो मामाक्षिपन्तीत्याशयेन तावदाह—स्वःपरश्चेति । मिथ्याभिनिवेशो यदीयया माययैव कृतो न तु वास्तवः अत एव तदीयया मायया विमोहितबुद्धीनां भवतामेव दृष्टो न तु मम तस्मै अचिन्त्यमायेश्वराय नमः ॥ ११ ॥

अहो किमेतत्प्रलपसि तव बुद्धिभेदो यतोजातस्तं कथयेत्याक्षिप्तः संस्तत्प्रसादादेवेत्युत्तरमाह—स इति त्रिभिः । स भगवान्यदानुव्रतोऽनुकूलो भवति तदा पशूनामविवेकिनामिव बुद्धिर्भेदगता असती मिथ्या संसारविषया विभिद्यते अभिन्नात्मनिष्ठा भवति ॥ १२ ॥

भेदस्यासत्त्वं दर्शयन्नाह—स एष परमात्मैव स्वःपर इतिचाविवेकिभिर्निरूप्यते युक्तश्चैतत् यतो यस्य वर्त्मनि जिज्ञासायां ब्रह्मादयोऽपि मुह्यन्ति, तत्र हेतुः, दुरत्ययं दुर्घटमनुक्रमणमनुचरितमनुवर्णनं वा यस्य ॥ १३ ॥

ननु, निर्विकारस्य कथं मतिभेदकत्वं ? तत्राऽह—यथेति । यथा अयो लोहमाकर्षस्यायस्कान्तस्य समीपे स्वयमेव भ्रमति तथा मे चेतश्चक्रपाणेः सन्निधौ तव कुतो जातस्तत्सन्निधिः ? तत्राऽह—यदृच्छयेति. कस्य तपोदानादेः फलमेतदिति न ज्ञायत इत्यर्थः ॥ १४ ॥

राजसेवक उवाचेति शेषः ॥ १५ ॥

अरे वेत्रं कशाऽऽनीयतां सामदानभेददण्डानां मध्ये चतुर्थो दमो दण्डोऽस्य दुर्बुद्धेरुदित उक्तः शास्त्रेषु दुर्बुद्धित्वे हेतुः कुलस्याङ्गारवन्नाशहेतोः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रश्नमेवाह—वत्सेति द्वाभ्याम् । हे वत्स ! प्रह्लाद ! ते तव भद्रमस्तु, न त्वां ताडयाम इति भावः । सत्यं यथार्थं कथय मृषा मिथ्या मा कथय. किं कथयेयम् ? तत्राह—बालानिति । बालानति अतिक्रम्य सर्वान् बालान् विहाय तुभ्यं तवैव एष बुद्धिविपर्यासः कुतो हेतोः ? अभूदिति ॥ ९ ॥

किमयं बुद्धिविपर्यासः परैर्विष्णुपक्षपातिभिः कृतः

---

(१) परः स्वश्चेति पाठान्तरम्. वीर० विज० क्रम० वि–चक्र० सिद्धा० । (२) स्वपरेत्यबुद्धिर्दुरन्वयानुक्रमणो-इति पाठान्तरम्. वीर० । (३) राजसेवकमिति पाठा० वीर० ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उताहो आहोस्विद् स्वत एव तवाभवत् हे दैत्यकुलनन्दन ! त्वद्गुरूणां श्रोतुकामानामस्माकं भणयतां कथ्यतामिति ॥ १० ॥

एवमुक्त आह प्रह्लादः–पर इत्यादिना चतुर्भिः । यत्पृष्टं बुद्धिभेदः परकृतः उत स्वाभाविक इति तत्र तमिमं स्वपरविभागं देहात्माभिमानरूपाज्ञानमूलकं भगवन्मायामोहितानामिति निन्दितुं तावद्देहात्माभिमानादिरूपमोहनिमित्तविचित्रमायाशक्तियुक्तं भगवन्तं नमस्करोति–पर इति. यस्येश्वरस्य मायया हेतुना स्वः परश्चेत्यसद्ग्राहः इदं मित्रमयं शत्रुरयन्देवो मनुष्यो ब्राह्मण इत्यादिदेहात्मभ्रमः कृतः सम्पादितः विमोहितधियां भगवन्मायया विमोहिता धीर्येषां तेषां भवतामेव दृष्टो न ममेति भावः तस्मै पूर्णषाड्गुण्याय नमः विमोहितधियामित्यनेन "दैवी ह्येषा गुणमयी मममाया दुरत्यया" इति भगवदुक्तरीत्या भगवदप्रपन्नानां भवतामेवासद्ग्राहः न तु तत्प्रपन्नस्य मम इति सूचितम् ॥ ११ ॥

तदेव व्यञ्जयन्नसद्ग्राहं निन्दति—स इति । स भगवान् यदा पुंभिरनुव्रतः आश्रितः तदा पुंसां पशुबुद्धिः पशुष्विव बुद्धिः देहात्माभिमानरूपा बुद्धिर्विभिद्यते निरस्यते कासौ पशुबुद्धिः ? या, अन्य एषः अन्योऽहम् इत्येवंरूपा सर्वशरीरेषु ज्ञानैकाकारतया परमात्मशरीरतया चावस्थिता नात्मनो विस्मरतां स्वः पर इत्येकरूपा भेदगता अनात्मभूतदेवासुरमनुष्यादिशरीरगता अत एवासती दुष्टा अनर्थावहा सैषा पशुबुद्धिरित्यर्थः ॥ १२ ॥

एवं स्वपरविभागहेतुभूतदेहात्मभ्रमादेर्भगवन्मायाहेतुकत्वकथनेन तच्छरणात्तन्निवृत्तिकथनेन च भगवत एवाज्ञानप्रदत्वं तन्निवर्त्तकत्वञ्चोक्तम्. अथ ज्ञानप्रदातृत्वमपि तस्यैवेत्याह—स इति । स उक्तविध एष आत्मा प्रकृतः परमात्मा स्वपरेत्यबुद्धिः स्वः परइति बुद्धिरहितः सर्वान्तरात्मतया सर्वत्र समत्वादित्यर्थः । दुरन्वयं पुरुषान्तरेष्वघटमानमनुक्रमणं व्यापारो यस्य तादृशो निरूप्यते अन्यैरशक्यं सर्वं सर्वशक्तिलीलया करोतीत्यर्थः । यस्य वर्त्मनि मार्गे यत्स्वरूपविमर्शने वेदवादिनो ब्रह्मादयोऽपि मुह्यन्ति स एष एव परमात्मा मम मतिं बुद्धिं भिनत्तीत्यर्थः । स्वपरेत्यबुद्धिरित्यनेन देवासुरादिविभागमन्तरेण सर्वेषां ज्ञानप्रदत्वमुक्तम्. दुरत्ययानुक्रमण इत्यनेन सर्वशक्तित्वं वैषम्यादिराहित्यञ्चोक्तम्. यद्वर्त्मनि ब्रह्मादयोपि मुह्यन्तीत्यनेन तत्प्रसादादेव ब्रह्मादीनामपि ज्ञानोदयः अन्यथा केवलं तेषामपि मोह एवेत्युक्तम्. स्वपरेत्यबुद्धिभिरिति तृतीयान्तमपि पाठान्तरं तत्र स्वः पर इति न विद्यते बुद्धिर्येषां तैः स्वपरविभागात्मकाविवेकरहितैरित्यर्थः । तादृशैर्दुरन्वयानुक्रमणोऽनितरसाधारणव्यापारो निरूप्यते ज्ञायते इत्यर्थः । तत्प्रसादान्निवृत्तदेहात्माभिमानादिभिः ज्ञानाज्ञानादिप्रदत्वेन परमात्मा ज्ञायते इत्यर्थः ॥ १३ ॥

एवं ज्ञानप्रदत्वमुक्तम् अथ तस्यैव तत्प्रदानेन स्वस्य प्रवर्त्तकत्वमाह—यथेति । आकर्षसन्निधौ अयस्कान्तसन्निधाने अयोलोहं स्वयमेव यथा भ्रमति, भ्राम्यति चञ्चलं भवतीत्यर्थः । तथा मम चेतोऽपि चक्रं पाणौ यस्य तस्य हरेः सन्निधौ यदृच्छया हेत्वन्तरनिरपेक्षं भिद्यते तत्प्रसादात्तत्सान्निध्यादेव ममैवंविधा बुद्धिवृत्तिरभूदित्यर्थः । अनेन "बुद्धिभेदः परकृतः उताहो ते स्वतोऽभवद्" इति प्रश्नस्योत्तरमुक्तं भवति ॥ १४ ॥

एवमुक्तोगुरुराहेत्याह–मुनिः—एतावदिति । ब्राह्मणान् दैत्ययाजकान् प्रत्येवम् एतावदेवोक्त्वा महामतिः स प्रह्लादो विरराम तूष्णीम्बभूव. ततो दीनः उपायान्तरेण तं स्ववशीकर्त्तुमशक्तो गुरुः तं निभर्त्स्य कुपितस्सन् राजसेवकम् उवाचेति शेषः॥१५॥

तदेवाह—आनीयतामिति द्वाभ्याम् । अरे हे राजभट ! इत्यर्थः वेत्रं प्रहरणसाधनयष्टिविशेषमानीयताम् अस्माकमयशोऽपकीर्तिङ्करोतीत्ययशस्कृत्तस्य अतएव कुलस्य दैत्यकुलस्याङ्गारवन्नाशकः तस्य दुर्बुद्धेरितः परं दमः शिक्षणोपायः चतुर्थ एव स्यात् दण्ड एवो पायः कर्त्तव्यो, न सामादिरित्यर्थः । चतुर्थोऽस्योदितो दम इति पाठे उदितः शास्त्रेषूक्तः चतुर्थो दण्डोपाय एवास्य दमो दमनसाधनमित्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तुभ्यं तव यो बुद्धिविपर्यय एव बालान् वयस्यान् अतिक्रम्य कुतोऽभूदिति शेषः बालानां बुद्धिमतिक्रम्यैष बुद्धिभेदः कुतः तस्मात्तुभ्यं रोचित इति वा ॥ ९ ॥

एतदेव विवृणवन्ति–बुद्धिभेद इति । अस्माकं तत्त्वमेव वक्तव्यं त्वयेत्यतो गुरूणामिति ॥ १० ॥

उत्तरं वक्ति—पर इति । पुंसां योऽयं परस्वश्चेत्यसद्ग्राहः "एकमेवाद्वितीयम्" इतिश्रुतेः परमार्थवस्तुन एकत्वे प्रामाणिके सिद्धे तत्र श्रीनारायणमन्तरेण परत्रिषयकर्तृत्वं स्वविषयकर्तृत्वमिति भेदः स्वातन्त्र्यकल्पनालक्षणमन्यथाज्ञानम् एष यस्येश्वरस्येच्छया कृतः कल्पितः सर्वकर्तृत्वात्तस्य तस्मै भगवते महामहिम्ने नमइत्यन्वयः । तत्प्रत्यक्षमित्याह-विमोहितधियामिति.दृष्टः प्रत्यक्षस्तस्मात्तादृशी बुद्धिर्भवादृशैर्न कार्येति शेषः । विमोहितेत्यनेनापीश्वरकर्तृत्वं ज्ञायते ॥ ११ ॥

यन्माययेत्युक्तं स्पष्टं दर्शयति–स यदेति । स भगवान् यदा पुंसां स्वात्मपरबुद्धिजनकत्वेनानुगतोऽनुकूलो भवति तदा पशुबुद्धिरज्ञबुद्धिर्विभिद्यते तत्कथमित्यत उक्तम्, अन्य इति. एष देवदत्तोऽन्यः स्वतन्त्रोऽहमन्यः स्वतन्त्र इति किमस्याधिकरणमिति तत्राह–देहगतेति. अत एवासती वृत्तिज्ञानत्वेन मोक्षानुपयोगित्वात् "अन्यो सावन्यो हमस्मीति न स वेद यथा पशुः" इति श्रुतिप्रतीकेनानेन श्लोकेन जीवपरयोर्भेदं निषिध्य चिदैक्यं विधीयत इतीममर्थं विधायाऽर्थान्तरकल्पनायां किं प्रमाणमितीयमाशङ्का स्वातन्त्र्येणान्यसद्भावनिषेधाय श्रुतिस्त्वियम् "अन्योसावन्योहमिति पश्यन्नज्ञ इति स्म ह"—

"आत्मानमन्तर्यमवेदिति भेदं स्वरूपतः ।
आह तद्ब्रह्मणोऽधीना भिन्ना जीवाः सदैव तु ॥
स्वरूपसत्ताकर्तृत्वं भोगो मोक्षस्तथैव च ।
मुक्तस्यावस्थितिश्चैव सर्वं विष्णोर्वशे सदा" ॥

इत्यनेन परिहृतेति ज्ञातव्यम् ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, यदि जीवपरौ मिथो भिन्नौ तर्हि किमिति घटपटभेदज्ञानवत्तद्विषयज्ञानं नोत्पद्यत इत्याशङ्क्य प्रतियोगिज्ञानस्य दुःसाध्यत्वादित्यभिप्रेत्याह—स एष इति । यः स्वस्वकर्मानुसारेण स्वस्वयोग्यज्ञानमुत्पादयति स एष आत्मा परमात्मा स्वपरत्वबुद्धिभिः यथार्थज्ञानविरोधिज्ञानवद्भिः पुरुषैर्दुरन्वयानुक्रमणः दुरन्वयं दुर्ज्ञानमनुक्रमणं तत्तद्योग्यतानुसारेण प्रवर्तनं यस्य स तथा दुर्ज्ञेयचेष्ट इत्यर्थः। निरूप्यते निश्चीयते ननु "वेदाहमेतंपुरुषंमहान्तम् आदित्यवर्णम्" इति श्रुतेः ब्रह्मादेस्तद्विषयज्ञानश्रवणात्कथं प्रतियोगिज्ञानस्य दुःसाध्यत्वमित्यत आह—मुह्यन्तीति । ब्रह्मादीनां भगवद्विषयज्ञानं दुःसाध्यं किं न्वितरेषामित्यतो वाह–मुह्यन्तीति । हिशब्दोऽप्यर्थे हेतौ वा वेदवादे कोविदाः ब्रह्मादयोऽपि यद्वर्त्मनि यत्र स्वरूपविषये मुह्यन्ति यस्मात्तस्मात्स एष दुरन्वयानुक्रमण इति निरूप्यते अननहरेरनुग्रहमन्तरेण तद्विषयज्ञानं नोत्पद्यते तस्मिन् सति तत्स्यात् "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः अन्वयव्यतिरेकौ दर्शिताविस्युक्तं भवति. ननु, त्वदुक्त्यैव त्वद्बुद्धिभेदजनकःकश्चित्स्यात्स क इति विचार्यत इति तत्राह–एष इति. मुह्यन्तीत्येतदत्राप्यनुकूल्यते यद्वर्त्मनि मुह्यन्त्येष हरिर्मम मतिं भिनत्ति विषयीकरोति सर्वस्य स्ववशत्वं स्वस्यानन्याधीनत्वं स्वप्रसादान्मोक्षादिसकलपुरुषार्थप्राप्तिरित्यादिबुद्धिं जनयतीति भावः तदुक्तम् "आह तद्ब्रह्मणोऽधीना भिन्ना जीवाः सदैव तु" इत्यादि॥१३॥

एतदर्थं सदृष्टान्तमाह–यथेति । यथाकर्षस्यायस्कान्तस्य सन्निधौ सत्ययः स्वयं आस्यति स्वात्मानमुद्दिश्य गमनशक्तिं करोति तदिति शेषः तथा मे चेतो यदृच्छया तदिच्छया चक्रपाणौ भिद्यते तद्विषयीकरणशक्तीक्रियते अयोगमनशक्तिवच्चेतनस्यापि नैसर्गिकीति भावः। एतेन सर्वं हर्यधीनमित्युक्तं भवति. "एतस्य वा अक्षरस्य प्रशासने गार्गि! प्राच्योन्यो नद्यः स्यन्दन्ते य आत्मानमन्तर्यमयेत्" इतिभेदस्वरूप आहेत्यादि श्रुतिस्मृतिभ्याम् । विशेषेणचराचरस्य सर्वस्य श्रीहर्यधीनप्रवृत्त्यवगमात्(१)पश्यन्नज्ञ इत्यनेन पशुबुद्धिरबुद्धिभिरित्येतत्पदद्वयाभिप्रायो दर्शितः ॥ १४ ॥

सुदीनः वाचा शिक्षायां क्षीणोऽशक्त इत्यर्थः । राजसेवक इत्यनेन भेदज्ञानासामर्थ्यञ्च सूचितम् उभयोरपि वित्तसाध्यत्वात् ॥१५॥

अयशस्कृतो दुष्कीर्तिकरस्यास्य चतुर्थो दमो दण्डसंज्ञ इति उदित इत्यर्थः ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पर इति पुंसां "भयं द्वितीयाभिनिवेशतः स्यात्" इत्यादिरीत्यानादित एव भगवद्विमुखानां जीवानाम् अत एव न्यूनं सेव्यया यस्य भगवतो मायया मोहितधियां स्वरूपविस्मरणपूर्वकदेहात्मबुद्ध्या विशेषेण मोहितबुद्धीनामसतां यन्माययैव परः परकीयोऽर्थः स्वीयोऽयमित्यसदाग्रहः कृतस्तस्मै भगवते नमः, तेषां तदाग्रहशान्तये तमेव नमस्कारोमीत्यर्थः। स्वशब्दोयमात्मवाचक-

(१) तात्पर्योक्तप्रतिक मिदम् ।

तायां नपुंसकमेव स्यात् "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः । तस्मादेवं व्याख्यातम् ॥ ११ ॥

ततश्च स यदेति कथञ्चिन्महतः प्रसङ्गेन तत्साम्मुख्ये सति यदा स भगवाननुकूलः स्यात्तदा पूर्वोक्ता पशुबुद्धिर्विभिद्यते नश्यतीत्यर्थः । ततस्तामेव विवृत्य दर्शयति—अन्य इति. अर्थकामशास्त्रानुसारिणां भक्ताननुगतानां नश्वरे सङ्घाते एवात्मता मननादिति भावः ॥ १२ ॥

स प्रसिद्धः परमात्मा तु एष मद्दृष्टिगोचरतामिव गतः पूर्वोक्तैः स्वपरेत्यबुद्धिभिस्तु दुरत्ययानुक्रमणो निरूप्यते दुर्बोधरीतितया निश्चीयते ॥ अहो आसतां ते यतस्तद्वर्त्मनि वेदवादिनोऽपि मुह्यन्ति तेप्यासतां ब्रह्मादयोपि मुह्यन्तीति स एष एव च मन्मतिं भिनत्ति । भवन्मतात् पृथक्करोति ॥ १३ ॥

ननु, तेनैव त्वन्मतिर्भिद्यते न त्वस्माभिः तथा तथैव मतिस्तेन भिद्यते न त्वस्माकमिति कथं? तत्राह—यथेति । यदृच्छया स्वैरितया कारणान्तरनिरपेक्षतयेत्यर्थः। "यदृच्छास्वैरिता" इत्यमरः । आकर्षायसोर्यथासौ स्वभावस्तथावयोरपीति युक्तमेव तत्सदित्यर्थः॥ १४ ॥

एतावदित्यर्द्धकम् । तामित्यर्द्धकम् ॥ १५ ॥

आनीयतामित्यस्याद्य चरणे युष्माभिरिति द्वितीये यस्मादयमिति परार्द्धे यतो यस्येत्यध्याहार्यम् 'आनयध्वमरे वेत्रम्' इत्यादिकं तया तु यन्नोक्तं तत् खलु तस्य कोमलतां दृष्ट्वा नातिस्पष्टं कर्त्तुमशक्त्वादितिगम्यते ॥ १६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भद्रं ते इति त्वदिष्टं मोदकादिकं दास्याम इति भावः । बालान् अतिक्रम्य तुभ्यं तव ॥ ९ ॥

भययतामिति यद्ययं वैष्णवस्य कस्यचिन्नाम गृह्णाति तदा तं वैष्णवं ज्ञात्वा राज्ञः सभां नीत्वा घातयाम इति भावः ॥ १० ॥

अहो मूढा इमे संसारे पापच्यमानाः मां मुग्धबालकं जानन्तीति मनसि विभाव्याह—परः परपक्षः स्वः स्वपक्ष इति असद्ग्राहः असदाग्रहः श्लेषेण पुंसां संसारसिन्धुपतितानां ग्राहो हिंस्रजलजन्तुविशेषः कृतः मायया सृष्टः इष्टः पूर्वमनुमित एवासीत् संप्रति तु प्रत्यक्षीकृत इत्यर्थः । अतो यूयं तेन प्रतिक्षणं चर्व्यध्वे एवेति भावः ॥ ११ ॥

बुद्धिभेदोऽयं तव कुत इत्यस्य प्रश्नस्योत्तरमाह—सइति । अनुव्रतोऽनुकूलः विशेषेण भिद्यते. विदीर्यते पशुबुद्धिरेव का? तत्राह—अन्य एषोऽस्मद्विपक्षस्तथाऽन्योऽहमेतस्य घातयितेति भेदं गता असती असाधुः "न हि गोप्यं हि साधूनामममित्रोदस्तविद्विषाम्" इति भगवदुक्तेर्वस्तुतस्त्वात्मदृष्ट्या सर्वजीवानामेकरूप्यात् देहदृष्ट्यापि सर्वदेहानां पञ्चभूतात्मकत्वाद्भेदो नास्त्येवेति भावः ॥ १२ ॥

उक्तलक्षणपशुबुद्धिमतां सुदुर्ज्ञेय इत्याह–स इति । एष परमात्मा स्वः स्वपक्षः परो विपक्षः इति कुत्सिता बुद्धिर्येषां तैर्दुरन्वयं

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

दुर्गमम् अनुक्रमणं अनुसरणं यस्य सः, न च सुबुद्धिभिः शास्त्रज्ञैः सुगममेव तदनुसरणमिति वाच्यमित्याह—यद्वर्त्मनि यत्प्राप्तिमार्गेऽनुसरणरूपे भक्तियोगे वेदवादिनो वेदार्थतात्पर्यविवेचका अपि मुह्यन्ति यूयन्तु ज्ञानलवदुर्विदग्धाः किमुतेति भावः। एष भगवान् मे मतिं भिनत्ति युष्मन्मतिभ्यस्सकाशाद्भिन्नां करोति ॥ १३ ॥

स एव मतेर्भेदः किमाकार इति वितर्क्याह—यथा अयो लोहं आकर्षस्यायस्कान्तस्य सन्निधौ स्वयं भ्राम्यति, तथैव मे चेतः चक्रपाणेः सन्निधौ स्वयमेव भ्राम्यति भिद्यते युष्मच्चेतोऽभ्यः सकाशाद्भिन्नं भवति यदृच्छयेति नात्र सत्कर्मनपोदानादेर्हेतुत्वं सम्भवतीत्यर्थः। अयमर्थः अयस्कान्तेन स्वशक्त्यैव लोहमाकृष्य स्वसंयुक्तीक्रियते तत्र किमपि कारणं प्रयोजनञ्च नास्तीत्ययस्कान्तस्य स्वभाव एव यथा तथैव चक्रपाणेरपि स्वभाव एवायं यत्कृपापरवशतया स्वभक्तस्य चेतसः स्वस्मिन्नाकर्षणमिति तत्र मम किं स्वातन्त्र्यमस्तीति भावः ॥ १४ ॥

राजसेवक उवाचेति शेषः ॥ १५ ॥

वेत्रं प्रहरणदण्डविशेषः यदयमयशस्करस्ततोऽस्य दुर्बुद्धेरुपायानां मध्ये चतुर्थो दमो दण्ड उदितः उक्तः शास्त्रेषु ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

बालान्प्रति उल्लङ्घ्य तुभ्यं तव बुद्धिविपर्ययः कुतो जातः ॥ ९ ॥

ते बुद्धिभेदः प्रवृत्तिमार्गमस्मदाद्यनुष्ठितं त्यक्त्वा वासुदेवे बुद्धिप्रवेशः परेण केनापि कृतः उताहो स्वतोऽभवदिति भण्यताम् ॥ १० ॥

परः स्वश्चेति असद्ग्राहः दुष्टाग्रहः यस्य मायया प्रकृत्या कृतः तयैव मोहितधियां भवतां हृष्टो, न तु मम, तस्मै भगवते नमः सर्वस्य वासुदेवात्मकत्वात् यदनुग्रहतो वासुदेवबुद्धिप्रवेशस्तस्य श्रीमद्गुरोर्विशेषतः परत्वासम्भवात् हरिगुरुप्रसादं विना स्वतश्च वासुदेवे बुद्धिप्रवेशासम्भवात् बुद्धिभेदः परकृतः उताहो ते स्वतोऽभवदिति वाक्यं सर्वथाऽनुपपन्नमिति भावः ॥ ११ ॥

तव बुद्धिभेदः कुत इत्यत्राह—सएषेति। स भगवान् यदा मनुष्यः अन्तर्यामिरूपेण गुरुरूपेण च अनुकूलो भवति तदा एषोऽन्योऽहमन्यः इति भेदगता इत्थं वासुदेवात्मकभ्रान्तिविलसितं भेदं प्राप्ता अत एवासती संसारप्रापिका अत एव पशूनामिव विवेकहीना बुद्धिर्विभिद्यते प्रवृत्तिमार्गाद्विभिन्ना भवति वासुदेवे प्रविशतीत्यर्थः ॥ १२ ॥

नन्वस्माकमनुमतः स कुतो नेत्यत्राह—स इति। स एष आत्मा परमात्मा दुरत्ययं दुरधिगममनुक्रमणम् अतत्त्वज्ञैर्वर्णनं यस्य अत एव स्वस्य परः शत्रुरिति अबुद्धिभिः परमात्मा भजनीय इति नास्ति बुद्धिर्येषां तैर्निरूप्यते न तु भवादृशास्तत्प्रपन्ना भवन्तीति भावः। "न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः। माययापहृतज्ञाना आसुरं भावमाश्रिताः" इति श्रीमुखोक्तेः ॥ भवतामसुरपक्षीयाणान्तु का वार्ता वेदवादिनो वेदत्रयीप्रोक्तकर्मनिष्ठास्तेभ्योऽपि श्रेष्ठाः ब्रह्मादयः यद्वर्त्मनि यत्प्राप्तिमार्गे मुह्यन्ति स्वपरेति सन्धिरार्षः ॥ १३ ॥

तत्कृपया तु मम बालस्यापि चेतस्तद्वर्त्मनि प्रविशतीत्याह—यथेति। यथा आकर्षसन्निधौ अयस्कान्तसमीपे अयो लोहः स्वयं भ्राम्यति तथा मे चेतो यदृच्छया चक्रपाणेः सन्निधौ भवतां प्रकृतिमार्गाद्भिन्नं भवति, तद्वर्त्मनि प्रविशतीत्यर्थः ॥ १४ ॥

तं प्रह्लादम् स ब्राह्मणो निर्भर्त्स्याहेति शेषः ॥ १५ ॥

अरे वेत्रमानीयताम् यतोऽयमस्माकमयशस्करः अतोऽस्य कुलाङ्गारस्य दैत्यकुलनाशहेतोः दमः दमनहेतुः उपायानां चतुर्थो दण्ड उदितः शास्त्रे उक्तः ॥ १६ ॥

---

भाषाटीका।

हे वत्स प्रल्हाद ! तुमारा भला हो तुम सच कहो झूठ मत बोलो कि इन बालकों को भी अतिक्रमण करके यह तुमारी विपरीति बुद्धि कैसे हुई ॥ ९ ॥

यह तुमारी बुद्धि का भेद किसी दूसरे के सिखाने से है अथवा आपही से है, हे कुलनन्दन ! हम तुमारे गुरु लोक सच्ची सुनने की इच्छा करते हैं तुम कहो ॥ १० ॥

प्रल्हादउवाच ॥

प्रल्हाद बोले, कि यह अपना यह पराया ऐसा असत् ग्रहण जिसकी माया से मोहित बुद्धि वाले असत्पुरुषों को होरहा है उस भगवान को नमस्कार है ॥ ११ ॥

वही भगवान् जब पुरुषों पर अनुकूल होता है तब यह अन्य है मैं अन्य हूं इस प्रकार पशुओं के तरह भेद को प्राप्त जो दुष्ट बुद्धि सो मेरीतरह भेद को प्राप्त हो जाती है ॥ १२ ॥

जिसके चरित का अनुवर्णन दुर्घट है और अबुद्धि लोग जिस को स्व पर ऐसा करके वर्णन करते हैं और जिसके मार्ग में वेद वादि बड़े २ ब्रह्मादिक मोहित होते हैं वही परमात्मा हमारी मति का भेद करते है ॥ १३ ॥

हे ब्रह्मन् ! जैसे चुंबक के समीप में लोह आपही खिच जाता है इसी प्रकार मेरा भी चित्त उन चक्रपाणि की इच्छा से भिन्न होरहा है ॥ १४ ॥

नारद उवाच ॥

नारदजी बोले, कि—महामति प्रल्हाद ब्राह्मण से इतना कह कर चुप होगए ॥ वह विचारा दीन ब्राह्मण राज सेवक प्रल्हाद को भय दिखाकर कुपित होकर बोला ॥ १५ ॥

अरे ! हमारा वेत्र तो लाओ यह हमारी अकीर्ति कराने वाला है इस कुलांगार दुर्बुद्धि को चतुर्थ उपाय दंड ही उचित है ॥ १६ ॥

दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः।
यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥ १७ ॥
इति तं विविधोपायैर्भीषयंस्तर्जनादिभिः।
प्रह्लादं ग्राहयामास त्रिवर्गस्योपपादनम् ॥ १८ ॥
तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम्।
दैत्येन्द्रं दर्शयामास मातृमृष्टमलङ्कृतम् ॥ १९ ॥
पादयोः पतितं बालं प्रतिनन्द्याऽऽशिषाऽसुरः।
परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम् ॥ २० ॥
आरोप्याङ्कमवघ्राय मूर्द्धन्यश्रुकलाम्बुभिः।
आसिञ्चन्विकसद्वक्त्रमिदमाह युधिष्ठिर ! ॥ २१ ॥

हिरण्यकशिपुरुवाच।

प्रह्लादानूच्यतां तात ! स्वधीतं किञ्चिदुत्तमम्।
कालेनैतावताऽऽयुष्मन् ! यदशिक्षद्गुरोर्भवान् ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्कुतः? तत्राह–दैतेया एव चन्दनद्रुमास्तेषां वनेऽयं कण्टकद्रुमतुल्यो जातः, तदेवाऽऽह, यस्य दैतेयचन्दनवनस्य मूलोन्मूलने परशुस्थानीयस्य विष्णोरयमर्भक एव नालायितो नालमिवाचरत्। यथा परशोश्छेदकत्वे बब्बूलादिद्रुमनिर्मितो दण्डः सहकारी तं विना छेदनासम्भवात्तथाऽयं विष्णोर्दैत्यमूलोच्छेदे हेतुर्जात इत्यर्थः ॥ १७ ॥

इति तं प्रह्लादं भीषयन्धर्मार्थकामवर्गस्य प्रतिपादकं शास्त्रमध्यापयामास ॥ १८ ॥

ज्ञातं ज्ञेयमुपायानां चतुष्टयं सामदानादि येन तं दैत्येन्द्रं प्रति मात्रा मृष्टमुद्वर्त्य स्नापितम् अलङ्कृतं भूषणतिलकादिभिः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कुलनाशकत्वं व्यनक्ति—दैतेया एव चन्दनद्रुमाः तेषां वनेऽयं कण्टकद्रुमतुल्यो जातस्तन्मूलेऽपि तेषां दैतेयचन्दनवनानां यानि मूलानि तेषामुन्मूलने छेदने परशोः परशुस्थानीयस्य विष्णोरयमर्भको नालायितः नालवदाचरितवान् यथा परशो-श्छेदकत्वे कर्बुरादिद्रुमनिर्मितो दण्डः सहकारी तं विना छेदनासंभवात् तथा अयं विष्णोः दैत्यमूलस्य छेत्तुः सहकारी जात इत्यर्थः ॥ १७ ॥

इतीत्थं वदन् तर्जनादिभिर्नानोपायैर्भीषयन् प्रह्लादं तं त्रिवर्ग-स्योपपादनं धर्मार्थकामप्रतिपादकं शास्त्रं ग्राहयामास ॥ १८ ॥

ततो गुरुरेनं प्रह्लादं ज्ञातं ज्ञेयानामुपायानां सामादीनां चतुष्टयं यस्य तादृशं ज्ञात्वा आलक्ष्य मात्रा मृष्टं उद्वर्त्य स्नापितम् अलङ्कृतञ्च प्रह्लादं दैत्येन्द्रंप्रति दर्शयामास, पितृसन्निधौ प्राप-यामासेत्यर्थः ॥ १९ ॥

ततः पादयोः प्रणमन्तं नमस्कुर्वन्तं बालम् आशिषा आशीःपूर्वकं प्रतिनन्द्य असुरो हिरण्यकशिपुः दोर्भ्यां भुजाभ्यां (पुत्रस्य शिरः) परिष्वज्य परमां निर्वृतिमानन्दं प्राप्तवान् ॥ २० ॥

तत उत्सङ्गे निधाय मूर्द्धन्युपघ्राय च अश्रुकलाम्बुभिर्हर्षा-श्रुजलबिन्दुभिरासिञ्चन् विकसद्वक्त्रं यस्य तादृशो दैत्यः सुतं प्रतीत्थं वक्ष्यमाणमाह—युधिष्ठिरेति पाठे सम्बोधनम् ॥ २१ ॥

तदेवाह—प्रह्लादेति। हे आयुष्मन् तात ! पुत्र प्रह्लाद ! भवा-नेतावता कालेन गुरोः सकाशाद्यदुपाशिक्षदधीतवांस्तन्मध्ये किञ्चिदुत्तमं स्वधीतं सम्यगादरेण गृहीतं तत् हे तात ! प्रह्लाद, अनू-च्यतां सम्यगानुक्रमेण पठ्यताम् ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उन्मूलयतीत्युन्मूलः स चासौ परशुश्च उन्मूलपरशुस्तत्स्य दैतेयचन्दनवनस्य मूलं तन्मूलपरशुस्तस्य नालायितः भण्ड-पवत्त्वात्तः ॥ १७ ॥

त्रिवर्गस्योपपादनं शास्त्रम् ॥ १८ ॥

ज्ञातं ज्ञेयानां धर्मादिपुरुषार्थानां चतुष्टयं येन स तथा तं ज्ञात-ज्ञेयसाधनचतुष्टयं वा मातृमृष्टं शरीरमलत्यागेन स्नानं कारितम् १९ ॥ २० ॥ २१ ॥

प्रह्लाद उवाच ।

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २३ ॥
इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नव लक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुष्ठु अधीतं पठितम् ॥ २२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पुनश्च स एव तादृशपरमशुद्धरूपस्य विष्णोर्नालायितः दृश्यसामञ्जस्यमतीवेति भावः ॥ १७—२२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यस्य वनस्य मूलोन्मूलने परशुस्थानीयस्य विष्णोर्नालायितो-दण्डस्थानीयः लोके हि परशोर्दण्डो वर्धुर एव सिद्धः स च कन्टकिद्रुमः ॥ १७ ॥

ग्राहयामास ग्राहयितुं यतते स्मेत्यर्थः ॥ १८ ॥

ज्ञातं ज्ञेयं ज्ञातुमर्हं, चतुष्टयं सामदामभेददण्डात्मकमुपायचतुष्कं येन तत् ॥ १९—२१ ॥

सुष्ठु अधीतं संशयादिरहितं अनुकूलं गुरोर्हिरण्यकशिपुमते शुक्राचार्यात्मजात् प्रह्लादमते गुरोः श्रीनारदात् ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किञ्च दैतेयचन्दनवने अयं कण्टकद्रुमः यत् यस्य दैतेयचन्दनवनस्य यन्मूलं हिरण्यकशिपुप्रभृतिदैत्ययूथपसमूहभूतन्तदुन्मूलयतीति तथा तस्य परशोः परशुस्थानीयस्य विष्णोर्नालायितो नालमिवाचरत्ययमर्भकः ॥ १७ ॥

त्रिवर्गस्य धर्मार्थकामसमूहस्योपपादनं प्रतिपादकं प्रवृत्तिशास्त्रं ग्राहयामास ॥ १८ ॥

ततस्तदनन्तरं गुरुः पाठकः एनं प्रह्लादं ज्ञातं ज्ञेयचतुष्टयं ज्ञातव्यभूतानां सामदानभेददण्डानां चतुष्टयं येन तं तथाभूतं ज्ञात्वा मात्रा मृष्टमुद्वर्तस्नापितमलंकृतञ्च दैत्येन्द्रपतिं दर्शयामास ॥ १९ ॥

चिरञ्जीवेत्याद्याशिषा प्रतिनन्द्य ॥ २० ॥

अश्रुकलाम्बुभिः आनन्दाश्रुबिन्दुजलैः ॥ २१ ॥

आयुष्मन् हे तात ! प्रह्लाद ! एतावता कालेन गुरोस्सकाशात् भवान् यत्किञ्चित् अशिक्षत तत्र उत्तमं सारभूतं सुष्ठु अधीतम् अनूच्यताम् अनुक्रमेण प्रपठ्यताम् ॥ २२ ॥

भाषा टीका ।

यह दैत्य रूप चंदन वन में कंटकद्रुम उत्पन्न हुआ है जिस दैत्य रूप चंदन वन की मूलको उन्मूलन करने वाला जो विष्णुरूप परशु ( कुल्हाडी ) उसका नाल ( बेंटा ) रूप सहकारी यह बालक है ॥ १७ ॥

इस तरह तर्जन आदि नाना उपायों से प्रह्लाद को भय देते हुए, अर्थ धर्म और काम इस त्रिवर्ग के प्रतिपादक शास्त्र को पढाने लगे ॥ १८ ॥

तदनंतर गुरुने जाना कि यह सामदानादि चारो उपायों को जानचुका तब माता से उबटन स्नान आदि पूर्वक अलंकृत कराकर, दैत्येन्द्र के समीप ले गये ॥ १९ ॥

असुरराज भी चरणों में पड़े हुए बालक को असीस द्वारा अभिनंदन कर बाहुओं से आलिंगन कर बड़े हर्ष को प्राप्त हुआ ॥ २० ॥

और गोद में बैठा कर मस्तक आघ्राणकर उसके प्रसन्न मुख को प्रेमाश्रुओं से सींचता हुआ, हे युधिष्ठिर ! यह वक्ष्य माण वाक्य बोला ॥ २१ ॥

॥ हिरण्यकशिपुरुवाच ॥

हिरण्यकशिपु बोला, कि—तात प्रह्लाद ! तुमारी दीर्घ आयु हो इतने काल तक जो तुमने कुछ गुरुजी से सीखा और जो अच्छा पढा उसे कहो ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पादसेवनं परिचर्या, अर्चनं पूजा, दास्यं कर्मार्पणम्, सख्यं तद्विश्वासादि, आत्मनिवेदनं स्वशरीरसमर्पणम्, यथा विक्रीतस्य गवाश्वादेर्भरणपालनादिचिन्ता न क्रियते तथा देहं तस्मै समर्प्य तच्चिन्तावर्जितमित्यर्थः ॥ २३ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रत्युताकार्यं करोति इत्याह—वित्तेष्विति । परद्रव्यापहारिणो यो दोषः प्रेत्य मरणानन्तरं नरकलक्षणः इह च लोके दण्डरूपश्च तं विद्वान् जानन्नपि वित्तेषु नित्यमभिनिविष्टं चेतो यस्य सोऽजितेन्द्रियोऽशान्तकामः कुटुम्बी च सन् तत्परस्य वित्तं हरति ॥ १५ ॥

एवं को गृहेष्वित्यादिभिः सप्तभिः श्लोकैर्गृहादिष्वनुरागो दुस्त्यज इत्युक्तम्, अथ तस्यानर्थावहत्वमाह-विद्वानिति । हे दनुजाः ! इत्थं विद्वानपि उक्तविधं संसारं जानन्नपि कुटुम्बं पुष्णन् बिभ्रत् यः स्वलोकाय आत्मयाथात्म्यदर्शनाय न कल्पते न समर्थो भवति प्रकृतिपुरुषेश्वरयाथात्म्यावमर्शनपरो न भवति, किन्तु इदं स्वीयमिदं परकीयमित्येवं विभिन्नो भावो यस्य, सर्वस्य परमात्मशेषतामजानन्नित्यर्थः, यथावत् विमूढः स तमो नरकमेव प्रपद्येत, यद्वा तत्त्वविदपि कुटुम्बभरणासक्तो देहात्माभिमानस्वतन्त्रात्माभिमानयुक्तो मूढवन्नरकमेव प्रपद्यते, न मुक्तिम् किं पुनः केवलमूढ इत्याह-विद्वानपीति । विद्वानपि प्रकृतिपुरुषेश्वरयाथात्म्यविदपि यःपुनः स्वीयपारक्यविभिन्नभावः इत्थं कुटुम्बं पुष्णन्भवति सः स्वलोकाय परमपदप्राप्तये न कल्पते किन्तु नितरां मूढवत्तम एव प्रपद्येत विदुष एवेयं गतिः, किं पुनरविदुष इति भावः यथा विमूढ इति दृष्टान्तवशात्किंपुनर्न्यायोऽत्रद्योत्यते ॥ १६ ॥

एवं गृहाद्यासक्तेर्दुस्त्यजत्वमनर्थावहत्वञ्चोक्तम्. अथोक्तमुपसंहरन् दुस्त्यजगृहाद्यनुरागत्यागनिमित्तमसत्सङ्गं परित्यज्य सत्सङ्गादिप्रसक्त्या भगवन्तमाश्रयेतेत्याह—यत इति । यतः कश्चिदपि पुमान् गृहाद्यभिनिविष्टश्चेदात्मानं कचिदपि काले कुत्रचिदपि देशे मोचितुं मोचयितुमसमर्थस्तत इत्युत्तरेणान्वयः। असामर्थ्ये हेतुरलमत्यर्थं दीनो विषयलंपटः वामा दृशो यासां तासां विहारे क्रीडामृगः क्रीडार्थसंवर्द्धितशाखामृगादितुल्यः, विहारमिति पृथक्पदपाठे विहारस्थानमात्मानमित्यन्वयः। वामदृशां विहारक्रीडामृगत्वं विशिनष्टि, यदिति। यद्यस्माद्वामदृशां क्रीडामृगत्वाद्धेतोर्निगडरूपो विसर्गः संसारबन्धो भवति मयमिति वा छेदः यत् क्रीडामृग इत्येतदयमेव निगडरूपः संसार इत्यर्थः यदिति छेदपक्षे यच्छब्देन वामदृशां वा परामर्शः यत् यासु निगडः शृंखलरूपो विसर्गः पुत्रादिरूपः सर्ग इत्यर्थः । अविसर्ग इति वा छेदः यद्यस्मात्क्रीडामृगत्वादविसर्गः । अविमोच्यो निगडः शृंखलतुल्यः संसारबन्धो भवतीत्यर्थः ॥ १७ ॥

तत इति । ततः यतो गृहादिष्वासक्तः आत्मानं मोचितुमसमर्थस्ततो विषयेषु शब्दादिष्वेव आत्मा मनो येषां तेष्वसत्सु दैत्येषु सङ्गं दूरात्परिहृत्य आदिदेवं जगदुदयस्थितिलयलीलं स्वतेजसा दीप्यमानं नारायणं जीवानां प्राप्यं प्रापकमाधारञ्च भगवन्तम् उपेत तत्सङ्गादिप्रणाडयाशरणं व्रजेत यद्यप्यत्र सत्सङ्गतेः कण्ठोक्तिर्नास्ति तथापि स्वस्य सत्सङ्गतेरेव हेतोर्ज्ञानोदयस्य स्वेनैव वक्ष्यमाणत्वात्स्वसङ्गत्यैव तैः सत्सङ्गतेः कृतप्रायत्वाच्च तदनुक्तावपि साभिप्रेतैव. एवं गृहाद्यासङ्गस्य दुस्त्यजत्वदोषावहत्वादिकथनेनैव तेषां वैराग्यमुदेष्यतीति वैराग्यमपि सम्पादनीयमिति शब्दतो नोक्तं स्वस्यैव ज्ञानोपदेष्टृत्वादाचार्यत्वेनावस्थितत्वाद्गुर्वभिगमनमपीहशब्दतः कर्तव्यत्वेननोक्तम्. किन्तु श्रीशप्रपदनमात्रमेव कुरुतेतिशब्देनोक्तम् धर्मान्भागवतानिति भगवच्छब्देनाभिप्रेतं निष्फलत्वशङ्कांव्युदास्तं व्यनक्ति—स इति । स उपेयो नारायणः अपवर्गः परमपुरुषार्थलक्षणापवर्गहेतुत्वेन मुक्तः सङ्गो देहतदनुबन्धिषु यैस्तैरीषित इष्टः स एव मुक्तसङ्गानामिष्टोऽपवर्गः फलरूप इत्यर्थः ॥ १८ ॥

एतदेव प्रतिपादयितुं तावत्तत्समाश्रयणस्य दुःशकत्वशङ्कां निराकुर्वन्नाह—नहीति । हे असुरात्मजाः ! अच्युतं सकृदाश्रयणादेव आश्रितान्न च्यावयतीति अच्युतः तं प्रीणतः पुंसो बह्वायासो न हि विद्यते देवतान्तरप्रीत्युत्पादकसाधनाऽनुष्ठानवद्भगवत्प्रीत्युत्पादकतद्धर्मानुष्ठाने नायासो विद्यते इत्यर्थः अनायासे हेतुः आत्मत्वादिति. सर्वभूतानामात्मत्वात्सर्वतः सिद्धत्वात्सुलभत्वात्सर्वत इति "सार्वविभक्तिकस्तसिः" षष्ठ्यर्थः । इह लोके सर्वतः सर्वेषां देवासुरादिस्त्रीपुंसवर्णाश्रमादिविभागमन्तरेण सर्वेषां सिद्धत्वादित्यर्थः । अयमभिप्रायः, न हि सुलभस्य तृणलोष्ठादेरन्वेषणाय विदूरगमनादिरूपः प्रयासोऽपेक्षितः सर्वत्र सर्वेषां सुलभत्वादेवं सर्वेषामात्मत्वेन सर्वत्र सुलभस्य प्रीणनेनातीवायास इति. यद्वा, सिद्धत्वादित्यस्य स्वर्गादिवन्न साध्यः पुरुषार्थः अपितु सिद्धरूपः साध्यपुरुषार्थसाधने हि यागाद्यनुष्ठानरूपप्रयासबाहुल्यम्. सिद्धस्यतु तल्लाभोपयुक्तप्रीणनोपायतत्समाश्रयणमात्रमपेक्षितमित्यर्थः यद्वा, आत्मत्वादित्यनायासे पृथग्घेतुः आत्मा हि स्वशरीरे निरतिशयप्रीतियुक्तस्तद्रक्षणशीलश्च लोके दृष्टः एवं सर्वेषां जीवानां परमात्मानं प्रतिशरीत्वात्तद्विषयकप्रीतेस्तस्य स्वतस्सिद्धाया अपि विपुलापराधैरनभिव्यक्तायास्तदभिव्यक्त्यावहं किञ्चिदानुकूल्यादिकमात्रमपेक्षितमिति भावः । सिद्धत्वादिति तत्रैवान्यो हेतुः, न हि सिद्धस्य हिरण्यनिधेस्तत्परिज्ञानमन्तरेण तल्लाभोपयुक्तोऽन्यः प्रयासोऽपेक्षितः एवं परमात्मनोपि निरतिशयपुरुषार्थरूपस्य हृदये सिद्धत्वात्तल्लाभोपयुक्तस्वामित्वशेषित्वादितद्याथात्म्यज्ञानपूर्वकतत्समाश्रयणमात्रेण तस्य समाश्रितविषयकप्रीतिरुदेष्यतीति नातीवायासो विद्यते इत्यर्थः ॥ १९ ॥

"आत्मत्वात्सर्वभूतानाम्" इत्येतदेव प्रपञ्चयति—परावरेष्विति चतुर्भिः । ब्रह्मा चतुर्मुखोऽन्तो येषां स्थावरा आदिर्येषां तेषु परावरेषूच्चावचेषु भूतेषु चराचरात्मकदेहभाक्षु चेतनेष्वित्यर्थः । तथा भौतिकेषु पृथिव्यादिभूतपरिणामरूपेष्वचेतनेषु घटपटादिषु महत्सु पृथिव्यादिमहाभूतेषु ॥ २० ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कोशस्थः कोशकारी कीटः, एतदेव स्पष्टयति—औपस्थ्यमिति ॥ १३ ॥

यदिति क्लृप्तं निजमात्मीयमायुर्यस्य स तथा शास्त्रविहितमर्थं अमोलक्षणं न बुध्यते स्वकुटुम्बे भार्यादौ रामः क्रीडा यस्य स तथा न निर्विद्यते विरक्तो न भवति ॥ १४ ॥

परवित्तहर्तुश्चौरादेरिह देहात्प्रेत्य यत्पूर्वमार्जितम्

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथाप्यनन्तरमपि तच्च तदेव दुष्कर्म हरते नयतीत्यन्वयः परलोकेपि विषयेष्वलं बुद्धिर्नास्तीति भावः ॥ १५ ॥

अनुक्तविशेषप्रदर्शनाय कथितमेवार्थं विशिनष्टि—विद्वानिति । स्वलोकाय स्वक्लृप्तमोक्षाय स्वयोग्यज्ञानाय वा तत्र हेतुमाह—यदिति. न केवलं मोक्षाय कल्पत इति. प्रत्युतानर्थं चाप्नोति, तम इति । विमूढो विपरीतज्ञानी यथा तमः प्रतिपद्यते तथाऽयमित्यन्वयः ॥ १६ ॥

श्रीनारायणानुग्रहमन्तरेण विद्वत्ताप्यकिञ्चित्करीत्याह—यत इति । शास्त्रगुरूपदेशेन विद्वान् संसारस्यानित्यतामिति शेषः दीनं स्वात्मानं विमोचितुमलं समर्थो नेति यतोऽत इति शेषः यदि जीवराशौ कश्चिदस्तीत्यभिमानस्तर्हि कुत्र कस्मिन्काले न कस्मिंश्चिदित्यर्थः । कुतोऽत्राह—वामदृशामिति. अयं पुरुषो वामदृशां विहारार्थं निर्मितक्रीडामृगइति यत्कथमयं तथाभूदिति तत्राह—निगड इति. आसामक्षिसर्गः कटाक्षमोक्षो यस्य निगडः शृङ्खलायितः तस्मात्स इति शेषः ॥ १७ ॥

एतावन्तं दैत्यान् कटाक्षीकृत्योक्तं प्रकटयन्मथितार्थमाह तत इति । नन्वेवं तर्हि संसारमोक्षस्य दौर्घट्यमापादितमिति शंका माभूत् यद्यर्थितास्ति तदुपायं वदामीत्यतो वाह—तत इति । यतो धर्मार्थकामैर्ब्रह्मार्पणबुद्धिरहितैः संसारमोक्षो न सेत्स्यति ततो दैत्येषु सङ्गं दूरात्परिहृत्य नारायणं शरणमुपेत, यातेत्यन्वयः । सोपवर्गो मुक्तसङ्गैः पुरुषैरिषितः प्राप्तो भवति "इषुगतौ" इतिधातोः ॥ १८ ॥

नेदं दुःसाध्यमित्याह—न हीति । सर्वभूतानामात्मत्वात्तत्प्रेष्टत्वात्सर्वत्र व्याप्तत्वेन सुलभत्वाद्वा ॥ १९ ॥

नारायणस्य सेव्यत्वे हेतुगर्भविशेषणमाह, परावरेष्विति ॥२०॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कोशस्कृत् कोशकीटः स यथा गृहं कुर्वन्नात्मनो निर्गमाय द्वारमपश्यन् म्रियते तथैव कर्माणि ईहमानः औपस्थ्यं सुखं जैह्व्यञ्च सुखम् ॥ १३ ॥

वियत् क्षीयमाणं निजमायुः पुरुषार्थञ्च हतं न बुध्यते वटिकामात्रस्याप्यपचयन्तु बुध्यत एवेति भावः । तदपि तस्मान्न निर्विद्यते ॥ १४ ॥

प्रेत्य नरकलक्षणम् इह च राजदण्डादिरूपं दोषं यद्यपि विद्वान् तदपि तानि वित्तानि हरते ॥ १५ ॥

विद्वानपि शास्त्रज्ञोऽपि स्वलोकाय कोहं किं करोमीति स्वमवलोकयितुमित्यर्थः । यथा विमूढस्तथैव हे दनुजाः ! ॥ १६ ॥

यतः कुटुम्बात् क्वापि देशे कुत्रचिदपि काले समर्थः शास्त्रज्ञानादिसामर्थ्यवानपि कश्चिदपि आत्मानं स्वीयं वा विमोचयितुम् अलं न शक्नोति. विहारमिति पाठे आत्मानमित्यस्य विशेषणं समासपाठे कर्तृविशेषणं याः कामदृश एव निगडो यत्र तथाविधः सर्गो जन्म भवेत् अपवर्गः संसारबन्धविमोचकः इषित इष्टः ॥ १७ ॥ १८ ॥

प्रीणयतः परिचर्य्यया प्रीणयितुं न बह्वायासः, यथा कुटुम्बं प्रीणयत इति भावः । न च तस्यान्वेषणे श्रमः आत्मत्वात् हृद्येव वर्त्तमानत्वात् न च तत्प्रीणनेऽपि श्रमः सर्वतः सर्वैरपि प्रकारैर्मानसैरप्युपचारैस्तत्प्रीणनस्य सिद्धत्वात्तथा अच्युतं प्रीणयामीति सङ्कल्पमात्रेणापि प्रीतेः सिद्धत्वात् श्रवणकीर्त्तनाद्यन्यतमेनापि वा सिद्धत्वात् ॥ १९ ॥

नकेवलं स्वहृदय एव वर्त्तमानः परिचरणीयः अपितु सर्वत्रैव वर्त्तमानः सर्वसम्माननेनैव सन्तोषणीय इत्युपदेष्टुं तस्य सार्वत्रिकीं सार्वकालिकीञ्च सत्तामाह, द्वाभ्याम्. परावरेषु उत्कृष्टनिकृष्टेषु भूतेषु ब्रह्मा अन्तो येषां स्थावर आदि र्येषान्तेषु भौतिकेष्वजीवेषु घटादिषु च महत्सु भूतेष्वाकाशादिषु गुणसाम्ये प्रधाने गुणव्यतिकरे महत्तत्वादौ परः भूतादिभ्यः प्राकृतेभ्यः प्रकृतेश्च सकशादन्य एकः परं ब्रह्मेति आत्मा परमात्मेति भगवानिति शब्दत्रयवाच्य ईश्वर ईयत इत्युत्तरेणान्वयः । कीदृशः ? अव्ययः सर्वेष्वपि कालेष्वशून्यः ॥ २० ॥ २१ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दुरन्तो दुष्पारो मोहो यस्यात एवोपस्थजैह्व्यं सुखं बहु अधिकं मन्यमानः तेष्वप्यवितृप्तकामः असमाप्तवासनः अत एव कोशस्कृत् कीटविशेषो यथा स्वबन्धनाय कोशं करोति तद्वत्स्वबन्धनाय कर्माणीहमानः कथं विरज्येत पुत्रादिषु विरागं कुर्यात् तान् विरागाभावात्कथं त्यजेत ॥ १३ ॥

कुटुम्बपोषाय निजायुर्वियत् क्षिपयन् प्रमत्तो विहतमर्थं न बुध्यते सर्वत्र तापत्रयेन दुःखित आत्मा यस्य स कुटुम्ब एव रामः रमणस्थानं यस्य सः न निर्विद्यते ॥ १४ ॥

परवित्तहर्तुः प्रेत्येह च दोषं विद्वान् जानन्नपि हरते परवित्तमिति शेषः । यतो वित्तेषु नित्याभिनिविष्टं चेतो यस्य सः तत्र हेतुरविजितेन्द्रिय इति तत्रापि हेतुः आशान्तकामः प्रवृद्धवासनः ॥ १५ ॥

यो विद्वान् सोपि इत्थं पूर्वोक्तविमूढवत् स्वकुटुम्बं पुष्णन् स्वीयपारक्यविभिन्नभावश्चेत् इदं स्वमिदं पारक्यमित्येवं विभिन्नो विनाशितो भावः सर्वात्मकवासुदेवभजनं येन सः स्वलोकाय विद्वत्प्राप्यलोकाय न कल्पते योग्यो न भवति किन्तु यथा विमूढस्तथा तमः संसारं प्रपद्येत प्राप्नुयादित्यर्थः ॥ १६ ॥

यतः कश्चिदपि क्वच कस्मिँश्चिदुपायेपि सति कुत्रचित्काले आत्मानं विमोचितुं समर्थो न भवति ततो दैत्येषु सङ्गं परिहृत्य नारायणमुपेतेत्युत्तरेणान्वयः असामर्थ्ये हेतुः अलमत्यर्थं दीनः अनादिमायावश्यः अत एव कामे दृक् यासां तासां विहारे क्रीडामृगः विनोदप्रदः यत् यासां विसर्गः पुत्रादिरूपो विविधः सर्गो निगडो बन्धनम् ॥ १७ ॥

नारायणमुपेत शरणं यात स मुक्तसङ्गैः त्यक्तसर्वसङ्गैः परमहंसैरिषितः यतोऽपवर्गः मुक्तप्राप्यः ॥ १८ ॥

गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा ।
एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः ॥ २१ ॥
प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम् ।
व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योऽविकल्पितः ॥ २२ ॥
केवलानुभवानन्दस्वरूपः परमेश्वरः ।
माययान्तर्हितैश्वर्य ईयते गुणसर्गया ॥ २३ ॥
तस्मात्सर्वेषु भूतेषु दयां कुरुत सौहृदम् ।
आसुरं भावमुन्मुच्य यया तुष्यत्यधोक्षजः ॥ २४ ॥
तुष्टे च तत्र किमलभ्यमनन्तआद्ये किन्तैर्गुणव्यतिकरादिह ये स्वसिद्धाः ।
धर्मादयः किमगुणेन च कांक्षितेन सारञ्जुषां चरणयोरुपगायतां नः ॥ २५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अच्युतस्य सर्वेषां भूतानां चेतनाचेतनानामात्मत्वान्मूलत्वात् सर्वतः धारकत्वनियन्तृत्वादितः इह जगति सिद्धत्वाभिव्यक्तत्वात् हेतोः अच्युतं प्रीणयतोवह्वायासो नहि ॥ १९ ॥

सर्वमूलत्वं सर्वत्र सिद्धत्वञ्चाह-परावरेष्विति द्वाभ्याम् । भूतेषु चेतनाचेतनरूपेषु अस्तीति शेषः ॥ २० ॥

---

भाषा टीका ।

कोश कर कीडे के सदृश चेष्टा करने वाला नाना प्रकार के कर्मों को करता हुआ कामनाओं से तृप्त नहीं होकर दुरन्त मोहवाला इन्द्रियोंको बहुत मानने वाले कैसे वैराग्य को प्राप्त हो सक्ता है ॥ १३ ॥

कुटुम्ब पोषण मे क्षीण होरहा जो आयु उसको और नष्ट हुए भये पुरुषार्थ को यह प्रमत्त नहीं जानता है सर्वत्र तापत्रय से दुःखित होकर भी उस दुःख को दुःख नहीं मानता है, क्योंकि ? अपने कुटुम्ब में रागवाला है ॥ १४ ॥

द्रव्य के विषैं नित्य ही प्रविष्ट चित्त वाला होकर पराये के द्रव्य हरने में पर लोक और इस लोक में जो नरक और दण्डादि दोष है उसको जानता भी है तो भी अजितेन्द्रिय अशान्त काम यह कुटुम्बी चोरी करता ही है ॥ १५ ॥

हे दनुजो ! ऐसे जानता हुआ भी कुटुम्ब पोषण करता हुआ आत्म विचार करने को समर्थ नहीं होता और अपने पराये पदार्थ में भिन्न भावना वाला होकर जैसे मूढ नरक को प्राप्त होता है तैसे ही जानता हुआ भी ॥ १६ ॥

जिसकारण कहीं भी कोई भी अपने आत्माको इस संसारसे छुडाने को समर्थ नहीं क्योंकि ? विचारा दीन स्त्रियोंके विहार करने का क्रीडा मृग हो रहाहै जिन स्त्रियों पुत्रपौत्रादि रूप पाशका बन्धन होता है ॥ १७ ॥

हे दैत्य हो ! तस्मात् विषयात्मक दैत्यों के सङ्गको दूरसे परित्याग करके आदिदेव श्रीनारायणके शरण जानो क्योंकि ? वही मुक्तसङ्ग मुनिलोगों का इष्ट है ॥ १८ ॥

हे असुरात्मजहो ! नारायणको प्रसन्न करने में बहुत परिश्रम नहीं है क्योंकि ? वह सर्व प्राणिओं के आत्मा है और सर्व सिद्ध है ॥ १९ ॥

परा वर स्थावरों से लेकर ब्रह्मापर्यन्त प्राणिओं में तथा पञ्चभूतों के विकार घटपटादिक और पञ्च महाभूतों में । गुणों में प्रकृति में और महत्तत्वादिकमें एकही ईश्वर अव्यय परमात्मा भगवान श्रीमन्नारायण विराजते हैं ॥ २० ॥ २१ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गुणसाम्ये प्रधाने गुणव्यतिकरे महत्तत्वादौ च परो ब्रह्मस्वरूपः ॥ २१ ॥

कथं तर्हि द्रष्टृदृश्यभोक्तृभोग्यादिभेदः ? माययेत्याह, प्रत्यगात्मा द्रष्टा भोक्ता तत्स्वरूपेण व्यापकतया निर्देश्यः दृश्यं भोग्यं देहादि तद्रूपेण च व्याप्यतया निर्देश्यो मायया ईयत इत्युत्तरेणान्वयः वस्तुतस्तु स्वयमविकल्पितोऽनिर्देश्योऽपि सन् यद्वा अनिर्देश्योऽप्येवंनिर्देश्यः सन् विकल्पित ईयत इत्यन्वयः ॥ २२ ॥

यतः केवलोऽनुभवात्मक आनन्द एव स्वरूपं यस्य, ननु, स एवचेत्सर्वत्र तर्हि सर्वत्र सर्वज्ञत्वाद्युपलभ्येत तत्राऽऽह, गुणात्मकः सर्गो यस्याः सा गुणसर्गा तया माययाऽन्तर्हितमैश्वर्यं येन सः ॥ २३ ॥

यस्मादेवं तस्मात्सर्वेषु भूतेषु यथोचितं दयां सौहृदञ्च कुरुत यया दयया उन्मुच्य सन्त्यज्य ॥ २४ ॥

धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षा त्रयी नयदमौ विविधा च वार्ता ।
मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ २६ ॥
ज्ञानं तदेतदमलं दुरवापमाह नारायणो नरसखः किल नारदाय ।
एकान्तिनां भगवतस्तदकिञ्चनानां पादारविन्दरजसाऽऽप्लुतदेहिनां स्यात् ॥ २७ ॥
श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम् ।
धर्मं भागवतं शुद्धं नारदाद्देवदर्शनात् ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ततः किमत आह, तुष्टे च तत्र तस्मिन्किमलभ्यम् तथाऽपि गुणपरिणामादैवादेव स्वसिद्धा अयत्नतः सिद्धा धर्मादयस्तैः किम् अगुणेन च मोक्षेण काङ्क्षितेन किं तमुपगायतान्नोऽस्माकमकाङ्क्षितस्यापि तस्य सिद्धेः यद्वा माभून्मोक्षस्तस्य चरणयोः सारं जुषां सुधां सेवमानानां तेनापि किमित्यर्थः ॥ २५ ॥

ननु, च धर्मादेरपुरुषार्थत्वे किमित्याचार्याभ्यां वेदोक्तत्वेन सत्यत्वाभिहितस्तत्राऽऽह, धर्मोऽर्थः कामश्चेति यस्त्रिवर्गस्तदर्थं च य ईक्षाद्या अभिहिताः ईक्षा आत्मविद्या त्रयी कर्मविद्या नयदमौ तर्को दण्डनीतिश्च द्विविधा च वार्ता जीविका तदेतत्सर्वं निगमस्यार्थजातं स्वसुहृदः स्वान्तर्यामिणः परमस्य पुंसः स्वात्मार्पणसाधनं चेत्तर्हि सर्वं सत्यं मन्ये सत्यपरत्वात् अन्यथा तदसत्यमेव यद्वा तदेतदखिलं निगमस्य त्रैगुण्यविषयस्य प्रतिपाद्यं मन्ये सत्यं पुनर्निस्त्रैगुण्यलक्षणं परमस्य पुंसः स्वात्मार्पणमेवेत्यर्थः । तदुक्तं भगवता "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।" इति ॥ २६ ॥

तेषां पुनर्विश्वासार्थं गुरुसम्प्रदायमाह-ज्ञानमिति । यत्र नारदः श्रोता तत्र कुतो मादृशानामधिकार इति माशङ्कीत्याह-भगवत एकान्तभक्तानां यत्पादरजस्तेनाऽऽप्लुतानां स्नातानां देहिनां सर्वेषामपि तज्ज्ञानं स्यान्न तूत्तमानामेवेति नियमः ॥ २७ ॥

अत एव मयापि पूर्वं नारदाच्छ्रुतं विज्ञानसहितमनुभवपर्यन्तं ज्ञानं धर्मं च श्रुतम् ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गुणेषु सत्त्वादिषु गुणानां सत्त्वादीनां साम्यं यस्मिंस्तस्मिन् प्रधाने मूलप्रकृतावित्यर्थः । गुणव्यतिकरे गुणवैषम्यवति महदहङ्कारादौ चेत्यर्थः ॥ २१ ॥

प्रत्यगात्मस्वरूपेण प्रत्यगात्मा जीवः स्वं स्वाधारणं रूपं शरीरं यस्य तेन प्रत्यगात्मशरीरकत्वेनेत्यर्थः । दृश्यमचेतनं रूपं यस्य तेन अचेतनशरीरकत्वेन चेत्यर्थः । एकः स्वसमानरहित एव परमात्मा परमात्मा अन्तः प्रविश्य भर्ता अव्ययः अस्पृष्टशरीरगतविकारः निरस्तनिखिलदोषः षाड्गुण्यपरिपूर्णः ईश्वरो जीवकर्मानुगुणं नियन्ता व्याप्यव्यापकनिर्देश्यः व्याप्येषु व्यापकतया निर्देष्टव्यः अविकल्पितः जातिगुणादिरहितः ॥ केवलोऽनुभवः दुःखप्रतिभटं ज्ञानम् आनन्दरूपं तदेव स्वरूपं यस्य सः परमेश्वरः स्वव्यतिरिक्तेश्वरान्तररहितः गुणसर्गया संसारिणां मोहादिगुणान् सृजतीति तया मायया अन्तर्हितैश्वर्यः संसारिणामप्रकाशमानमहिमा ईयते गम्यते सदाचार्योपदेशेन ज्ञायत इत्यर्थः । उक्तविधतथायात्म्यज्ञानपूर्वकं तत्समाश्रयणमात्रमेव तत्प्राप्तिनिमित्ततत्प्रीतिहेतुरुपाय इति भावः । अत्र अविकल्पितः' 'केवलानुभवानन्दस्वरूपः' इति पदद्वयेन "अस्थूलमनण्वह्रस्वम्" 'सत्यं ज्ञानमनन्तम्' 'विज्ञानमानन्दम्" इति श्रुत्यर्थप्रत्यभिज्ञापनेन प्राप्यं ब्रह्मस्वरूपमुक्तम् अवशिष्टैरेक एवेत्यादिभिः प्रथमान्तपदैः 'प्रत्यगात्मस्वरूपेण' दृश्यरूपेण चेति पदद्वयेन च प्राप्यस्य गुणा उक्ताः, "परावरेषु भूतेषु प्रत्यगात्मस्वरूपेण चेत्यनेन जीवस्य तच्छेषत्वापरपर्यायतच्छरीरत्वकथनेन प्राप्तृस्वरूपमुक्तम् "गुणसर्गया माययाऽन्तर्हितैश्वर्यः" इत्यनेनाऽब्रह्मात्मकत्वस्वतन्त्रात्मत्वादिरूपमोहादिप्राकृतगुणगण एव प्राप्तिविरोधीति कथनेन विरोधिस्वरूपमप्युक्तम्. तत्प्राप्तिफलन्तु तच्चरणकैङ्कर्यादिरूपं "सारं जुषां चरणयोः" इति वक्ष्यति. एवमर्थपञ्चकमुपदिष्टं भवति पूर्वम् "उपेतनारायणम्" इति तत्समाश्रयणं कर्तव्यत्वेन विहितं तस्य दुष्करत्वशङ्कापरिहारप्रसङ्गात्समाश्रयणोपयुक्तार्थपञ्चकज्ञानं सदाचार्योपदेशात्सम्पाद्यमित्युक्तम्. एवमर्थपञ्चकज्ञानपूर्वकतत्समाश्रयणमात्रमेव तत्प्रसादजननद्वारा तत्प्राप्तिहेतुरित्यभिप्रेतम्, तत्समाश्रयणञ्च तद्भक्तिप्रपत्त्यन्यतरात्मकमधिकारभेदेन व्यवस्थितमिति तात्पर्यम् ॥ २२ ॥ २३ ॥

यदुक्तं "न ह्यच्युतं प्रीणयतो बह्वायासः" इति तदुपसंहरन् तत्प्रीतिनिमित्ततत्सन्तोषजनकं हेत्वन्तरमाह—तस्मादिति । यस्मात् सर्वान्तरात्मत्वादिप्राप्यब्रह्मस्वरूपादिज्ञानपूर्वकतत्समाश्रयणमात्रमेव तत्प्राप्त्यावहतत्प्रीतिहेतुस्तस्माद्यूयं सर्वे आसुरं भावं भूतद्रोहशीलत्वादिरूपम् उन्मुच्य समूलं त्यक्त्वा परमात्मशरीरेषु सर्वेषु भूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु यथोचितं दयां सौहृदञ्च कुरुत यथा यथा अधोक्षजो भगवांस्तुष्यति तादृशीं भूतेषु दयां कुरुतेत्यर्थः ॥ २४ ॥

तुष्यत्यधोक्षजः ततः किमत आह—तुष्ट इति । तस्मिन्नाद्ये जगत्कारणभूते अनन्ते भगवति तुष्टे सति अलभ्यं किम् ? न किमपि सर्वं तस्मिन् तुष्टे सति अभिलषितं सुलभमेवेत्यर्थः । यद्यपि सुलभं तथापि निरतिशयपुरुषार्थरूपतच्चरणारविन्दानुभवरूपममृतमनुभवद्भिः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मादृशैर्धर्मैश्वर्यकामकैवल्यादिकममृतं पिबद्भिरूषरोदकमिव नेष्यते इत्याभिप्रायेणाह, किमितेि । नोऽस्माकं गुणव्यतिकरात् कर्मानुगुणसत्त्वादिगुणपरिणामादेव स्वसिद्धा अयत्नतस्सिद्धाः ये धर्मादयः धर्मार्थकामाः तैर्धर्मार्थकामैः किं, न किमपि प्रयोजनमित्यर्थः । कांचित्वेनाभिलषितेन अगुणेन गुणत्रयरहितेन कैवल्येन मोक्षेण वा किं सोऽपि न पुरुषार्थ इत्यर्थः । न कथम्भूतानां भगवच्चरणयोः सारमनुभवात्मकममृतं सारं जुषतां सेवमानानाम् उपगायतां तद्गुणान् स्तुवतां मनसा तच्चरणारविन्दानुभवामृतम् अनुभवतां वाक्छ्रवणाभ्यां तद्गुणानुभवामृतञ्चानुभवतामस्माकं धर्मादय ऊषरोदकप्राया इत्यर्थः ॥ २५ ॥

ननु, त्वदुक्तमेतत्सर्वं जानन्तोऽप्यस्मद्गुरवस्त्रिवर्गमेव पुरुषार्थत्वेनोपदिदिशुः त्वन्तु त्रिवर्गमनादृत्य भगवच्चरणारविन्दाश्रयणमेव सारतमं मन्यसे किञ्च गुर्वनुशिक्षितान्वीक्षिक्यादिशास्त्रेषु न त्वदुक्तधर्मः कर्तव्यत्वेनोपलभ्यते अतः किं तद्धर्मप्रमापकं तत्राह—धर्मेति धर्मादीनां समाहारद्वन्द्वः पुंस्त्वमार्षम् धर्मार्थः कामश्चेति त्रिवर्गोऽभिहित अस्मद् आचार्यैर्भार्गवादिभिरिति शेषः । त्रिवर्गः पुरुषार्थत्वेनाचार्यैरुक्त इत्यर्थः । यच्च तत्प्रतिपादिकेक्षा निरूपा त्रिधा च तदेतत्सर्वमहं मन्ये तत्रेक्षा आन्वीक्षिकी संज्ञा तर्कविद्या, त्रयी वेदपूर्वभागः नयदमौ दण्डनीतिप्रतिपादके शास्त्रे, विविधा वार्ता कृष्याद्याजीविकाज्ञानजनकं शास्त्रम्, एतत्सर्वमहं मन्ये जानाम्येव, किन्तु यत्त्वत्सुहृदः परमस्य पुंसो निरुपाधिकसुहृदे, परमपुरुषायेत्यर्थः । सम्पदानस्यैव शेषत्वविवक्षया षष्ठी. स्वात्मार्पणं भगवति स्वात्मसमर्पणं तदेतन्निगमस्य वेदान्तभागस्य, प्रमेयमिति शेषः । उपनिषद्भागस्य प्रतिपाद्यं सत्यं नित्यम् अत्यन्तपुरुषार्थसाधनं, मन्य इत्यर्थः । अस्मद्गुरुभिः ज्ञातमप्यहं जानामि नित्यनिरतिशयपुरुषार्थसाधनं भगवत्यात्मसमर्पणं वेदान्तप्रतिपाद्यं त्वधिकारं जानामीत्यर्थः । गुरवस्तु नैतज्जानन्तीत्यभिप्रायः आपाततो जानन्तो वा मदनुग्रहाभावान्नानुष्ठानोपयोगितया निस्संशयं जानन्तीति तात्पर्यं निगमस्येत्यनेनाऽस्मदुक्तार्थे वेदान्तभागः प्रमाणमित्युक्तम् । स च “ओमित्यात्मानं युञ्जीत मुमुक्षुर्वै शरणमहं प्रपद्ये” इत्यादिरूपः स्वात्मार्पणमित्यनेन त्रोमेत्नारायणं हरिमाश्रयेतेत्याद्युक्तमाश्रयणमात्मसमर्पणरूपमिति विवृतम्. भगवति स्वात्मसमर्पणं नाम स्वात्मनो भगवच्छेषैकस्वभावत्वानुसन्धानपूर्वकं भगवति स्वात्मरक्षाभरसमर्पणरूपम् एवं नारायणोपायत्वं नाम तच्छरणागतिरित्युक्तम्भवति. समनन्तराध्याये तदुपायनस्य तद्भक्त्यात्मकत्वं वक्ष्यति एवञ्च यथाधिकारं भक्तिप्रपत्त्यन्यतरात्मकं भगवत्समाश्रयणं कर्तव्यमिति तात्पर्यम् ॥ २६ ॥

ननु, गुरुभिरज्ञातमिदमन्तरेणापि सदुपदेशेन कथं त्वं ज्ञातवानित्याशङ्कायां भगवतो नारदस्यानुग्रहादेवेति वक्तुं तस्य साम्प्रदायिकत्वमाह—ज्ञानमिति । तदेतद्दुरवापं दुर्लभं ज्ञानं नरस्य सखा भगवान्नारायणो बदरिकाश्रमवासी नारदायाह उपदिष्टवान्. ननु, यत्र नारदः श्रोता नारायणो वक्ता तस्मिन्मादृशानां कथमधिकार इति शङ्कां निराह, एकान्तिनामिति एकान्तिनामकिञ्चनानामनन्यप्रयोजनानां भगवतः पादारविन्दरजसा आप्लुतानां स्नातानां देहिनां भगवत्सेवासक्तानां सर्वेषामपि तज्ज्ञानं स्यादेव नतूत्तमानामेवेति नियमः ॥ २७ ॥

अत एव मयापि नारदाच्छ्रुतमित्याह—श्रुतमिति. विज्ञानेन विवेकादिजन्येन संयुतं ज्ञानं शास्त्रोत्थं विशुद्धं भागवतधर्मरूपं भगवद्याथात्म्यवेदिनो नारदाच्छ्रुतं श्रवणेन ज्ञातं भगवतो नारदस्य वचसां श्रवणान्मम ज्ञानविज्ञानसम्पत्तिरभूदित्यर्थः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुणसाम्ये प्रलये गुणव्यतिकरे सृष्टौ ॥ २१ ॥

व्याप्तिप्रकारमाह—प्रत्यगात्मेति । सर्वपदार्थानामन्तः प्रत्यगात्मस्वरूपेणान्तर्यामिरूपेण बहिः कालरूपेण व्याप्तेन ब्रह्मपदपर्यायेण एवमेक एव व्याप्यव्यापकनिर्देश्यो विकल्पितो विविधकॢप्तः “अन्तर्यामी प्रत्यगात्मा व्याप्तः कालो हरिः स्मृतः” इति वाक्यसिद्धोऽयमर्थः घट इव निर्देश्यो नेत्यनिर्देश्यरूपः ॥ २२ ॥

“अचिन्त्यमव्यपदेशमैकात्म्यप्रत्ययसारम्„ इति श्रुतिनिरूपित इत्याह—केवलेति । सर्वत्र सिद्धश्चेत्किमिति न दृश्यत इति तत्राह—माययेति. मायया प्रकृत्या “तमसा गूढमग्रे” इति श्रुतेः । सत्त्वादिगुणैः सर्गसृष्टिर्यस्याः सा तथा तया ॥ २३ ॥

यतः सर्वभूतानि भगवद्भिन्नावस्थानानि तस्मात्तथाभूतद्वयया आसुरं भावं द्वेषं “विष्णोर्गृहत्वाद्भूतेषु दया कार्या विजानता” इति स्मृतेः प्रद्विषन्तोऽभ्यसूयका इति ॥ २४ ॥

भगवत्तुष्ट्या किं प्रयोजनमिति तत्राह—तुष्ट इति । ये अनुसिद्धाः जन्मप्रभृतिप्राप्तास्तैर्गुणव्यतिकरैर्विषयसुखैर्हरेश्चरणयोः सारं जुषां गुणलक्षणमकरन्दं सेवमानानां तद्गुणांश्चोपगायतां गायमानानां नोऽस्माकं कांक्षितेनागुणेनान्यैर्वाऽङ्कितेन मोक्षेण किं अपक्वभक्तिलभ्यमुक्तेर्भक्तेः परमानन्दस्वरूपत्वात्तत्रापि सुखाधिक्यहेतुत्वात्सुतरां धर्मादिभिः सुतमां गुणव्यतिकरैः फलं नास्तीति किमु वक्तव्यम्. मोक्षे सुखमनाकाङ्क्षमाणस्य यथा सुखाधिक्यं भवति यथा मोक्षगतं सुखं काङ्क्षमाणस्य सुखं पूर्णं न लभ्यत इत्यभिप्रायेण कांक्षितेनेति विशेषणम् “काङ्क्षतो मोक्षगमपि सुखमाकाङ्क्षतो यथा ” इति वचनात् ॥ २५ ॥

ननु, शास्त्रविहितानां धर्मादीनां कथङ्कारं साफल्यं भवतीत्याशङ्का परिहरन्नाह—धर्मेति । धर्मार्थकाम इति नाम्नभिधो यस्त्रिवर्गः शास्त्रे विहितस्तस्येक्षा ज्ञानमनुष्ठानं च या त्रयी त्रयो वेदास्तेषां शब्दतोऽर्थतश्च ज्ञानं यो नयदमौ नीतिदण्डशास्त्रे तयोः रीक्षा तात्पर्यज्ञानं या च विविधा वार्ता कृषिवाणिज्यादिलक्षणा तदीक्षा प्रयोगज्ञानं वा “ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वणश्चतुर्थः” इत्यारभ्य “सर्वदेवजनं विद्या” इत्यनेन यदुक्तं तस्य सर्वस्यानुकर्षणार्थश्चकारः यदेतदुक्तं तदेतदखिलं परमपुरुषस्य स्वात्मपूर्वकसमर्पणमर्पितमुद्दिष्टं भवति. तर्हि निगमस्य ऋग्वेदादिलक्षणशास्त्रपठितस्य सत्यं यथार्थफलमिति मन्ये इत्यन्वयः ॥ २६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नेदं स्वमनीषोत्थं किन्तु सम्प्रदायतः प्राप्तत्वाच्छ्रद्धेयमित्याह, ज्ञानमिति । नरसखोऽनन्तसखः अनेन विशेषणेन सनकादिभ्य उपदिष्टमिदमिति ज्ञापितम्. किल शब्देन पुरातनत्वेन ग्राह्यत्वं दर्शयति ज्ञानाधिकारिण आह, एकान्तिनामिति ॥ २७ ॥

तत्र कुतः प्राप्तमेतदत्राह, श्रुतमिति ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वोक्तं तत्तद्रूपत्वमेवोपपादयति—परावरेष्विति, चतुष्केण । तेषु तेष्विव एव पर आत्मा सर्वेषां मूलस्वरूपो भगवान् स्वरूपभूताऽचिन्त्यतत्तच्छक्तिः । अत एवेश्वरो दुर्घटघटनासमर्थः अत एवाऽव्ययः । स्वेनैव तत्तद्भावेऽप्यधिकारी सन् स्वयमेव प्रत्यगात्मस्वरूपेण जीवरूपेण केषाञ्चित् तन्मात्रज्ञानानामीयते केषाञ्चित्तु ततोऽप्यधमज्ञानानां दृश्यरूपेण प्रधानरूपेण चेयते । तत्र जीवरूपेण व्यापकत्वेन निर्देश्यो भवति । प्रधानादिरूपेण तु व्याप्यरूपतयेत्यनेनेत्यर्थः । केषाञ्चित्तु अद्वैतज्ञानिनां स एव परमेश्वरः अनिर्देश्यः सन्नविकल्पितो भेदमात्रशून्यश्च सन् केवलानुभवानन्दस्वरूप एवेयते नतु स्वरूपशक्तिमयैश्वर्ययुक्तः । कथं ? तत्राह, मायेति । तत् कृपया मायान्तर्हिते सम्यक् सर्वैरीयते । न तत् प्रकाशत इति भावः तस्यास्तच्छादकधर्मत्वमेव दर्शयति—गुणसर्गयेति । सत्त्वादिगुणविक्षेपिकयेत्यर्थः । ब्रह्मज्ञानिनामप्यहित सत्त्वगुण एवावरक इति भावः ॥ २१—२३ ॥

तस्मात् सर्वेष्वेव भूतेषु तत्त्वात्ममात्रसम्बन्धिषु दयां कुरुत. भगवत एवाधिष्ठानत्वात् । सौहृदमात्मीयबुद्धिं कुरुत ॥ २४ ॥

पूर्वानुसारेणैव भगवत्तोषस्य ब्रह्मसिद्धितोऽप्युत्कृष्ट फलमाह—तुष्टे चेति । अहो तत्वराणि फलानि तत्साधनान्यपि यत् सम्बन्धेनानश्वरत्वफलाय कल्पन्त इत्याह—धर्मार्थेति ॥ २५—२६ ॥

एतादृश ज्ञानस्य विरलत्वं तद्भक्तकृपैकलभ्यत्वञ्चाह—ज्ञानमिति । नरसख इति तत्र श्रीमन्नरस्य तद्भक्तवरस्य कृपामाहात्म्यं दर्शितं यत एवैकान्तिनामिति । साक्षात्तदुपदेशोऽपि तद्भक्तकृपापेक्षते, किमुतान्यदेवेति भावः ॥ २७ ॥

तत्रैव स्वस्य दर्शयति श्रुतमिति । ज्ञानं तत्प्रतिपादकं वाक्यं यदेव स्वयमनुभवपर्यन्तं फलं तत्सहायत्वेन भागवतं धर्मश्च श्रुतम्, तदनुक्रममेव ननु ज्ञानकर्मादिमिश्रम् ॥ २८—३० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, स ज्ञायते चेदिदमित्थंकारेण निर्दिश्यतामित्यत आह—प्रत्यगात्मेति । प्रतीचां सर्वजीवानामात्मा परमात्मा तत्स्वरूपेण व्यापकः दृश्यञ्जगत् तद्रूपेण व्याप्य इत्येवं व्याप्यव्यापकनिर्देश्यः वस्तुतः स्वयं ह्यनिर्देश्यः अनिर्देश्योऽपि विकल्पितः उपासकभेदैर्ब्रह्म परमात्मा भगवानित्येवं विकल्पविषयीकृतोऽपि केवल एकोऽनुभवात्मक आनन्द एव स्वरूपं यस्य सः एवं सर्वत्र स्वस्वरूपभूतैश्वर्येण प्रकटमेव विराजमानोऽपि मायया स्वाविद्यया हेतुना जीवैर्द्रष्टुमशक्यत्वादन्तर्हितैश्वर्य ईयते. कीदृश्या ? गुणानाम् इन्द्रियैरनुभूयमानानां शब्दादीनां सर्गः सृष्टिर्यतस्तयेति शब्दादय एवानुभाव्यन्ते न तु तत्रैव प्रति तया स्ववृत्त्या सन्नपीश्वरः ईश्वरप्रतितया स्ववृत्त्या अविद्यया जीवदृष्ट्यावरणात्तेन—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" ॥

इति भगवदुक्तेस्तद्भक्त्यैव मायातरणे सति स यथायोगं भक्तितारतम्येन निर्देश्योऽपि भवतीति भावः ॥ २२ ॥ २३ ॥

यतो भक्तिगम्य एव भगवान् सा च भक्तिः सर्वभूतेषु दयासौहृदाभ्यां सुस्थिरा निर्विघ्ना भवत्यतस्ते एव विधत्ते तस्मादिति सौहृदं स्नेहञ्च सर्वाण्यमानि भूतानि भगच्छक्तिमयत्वाद्भगवद्रूपाण्येव स्वरूपेणापि सर्वत्रैवैतेषु स मत्प्रभुर्विराजत एव श्रीमद्गुरुवैष्णवकृपया यदि मां भक्तिदेवी स्वीकरिष्यति तदा सोऽपि साक्षात् द्रष्टव्य इति बुद्ध्येति भावः यथा दयया सौहृदेन च ॥ २४ ॥

ततश्च तस्मिंस्तुष्टे त्वयि धर्मादिभिः काङ्क्षितैः किम् ? न किमपि फलमित्यर्थः । ये गुणानां व्यतिकरात् परिणामात् इह जगति स्वत एव सिद्धाः अगुणान मोक्षेण च किं यतः चरणयोः सारञ्जुषां सेवमानानाम् उपभोगादप्याधिक्येन गायतामिति चरणयोः कमलत्वं सारस्यसौरभ्यमाधुर्यादित्वं तत्सेविनां भ्रमरत्वमारोपितं भ्रमरत्वेन स्वाभाविकं काङ्क्षितान्तरशून्यत्वं व्यञ्जितम् ॥ २५ ॥

ननु, च धर्मादेरपुरुषार्थत्वे कथं त एव गुरुपुत्राभ्यां वेदोक्तत्वेनोक्तास्तत्राह—धर्मार्थ इति । ईक्षा आत्मविद्या त्रयी कर्मविद्या नयदमौ तर्को दण्डनीतिश्च विविधा च वार्त्ता जीविका तदेतदखिलं निगमस्यैव सम्बन्धि वेदोक्तमेव मन्ये एव ननु, दूषयामि तादृशाधिकारिसम्मतत्वादिति भावः । सत्यं सदूभ्योश्चिनं तु परमस्य पुंसः परमे पुंसि स्वात्मार्पणं स्वस्यात्मनस्तदीयत्वेनार्पणं श्रीस्वामिचरणास्तु तदेतदखिलं निगमस्य त्रैगुण्यविषयस्य प्रतिपाद्यं मन्ये सत्यं पुनर्निस्त्रैगुण्यलक्षणं परस्य पुंसः स्वात्मार्पणमेवेत्यर्थः । तदुक्तं भगवता "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन!" इति व्याचक्षते स्म ॥ २६ ॥

तेषां विश्वासार्थं गुरुसम्प्रदायमाह—ज्ञानमिति । यत्र नारदः श्रोता तत्र मादृशानां निकृष्टानां कुतोऽधिकार इति नाशङ्कनीयमित्याह, भगवता एकान्तभक्तानां यत्पादरजस्तेनाप्लुतानां स्नातानां देहिनां सर्वेषामपि तज्ज्ञानं स्यात् न तूत्तमानामेवेति नियमः ॥ २७ ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गुणाख्ये प्रधाने च गुणव्यतिकरे महदादौ परः सर्वचेतनाचेतनाविलक्षणस्वरूप ईयते आरकत्वनियन्तृत्वादिना निश्चीयते

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मा सर्वेषामात्मा मूलभूतः एको निस्समानातिशयो भगवानेव. ननु, सर्वभूतत्वे सति तस्य विकारित्वं स्यान्नेत्याह, अव्ययः निर्विकारस्वरूपः विश्वं सृजतीति भावः ॥ २१ ॥

स्वरूपेण निर्विकारत्वं सर्वमूलत्वञ्चोपपादयति, प्रत्यगात्मस्वरूपेण "अणुर्ह्येष आत्मा चेतसा वेतसा वेदितव्य एषपरस्यांशः" इत्यादिश्रुतिप्रसिद्धजीवस्वरूपेण स्वांशेन अदृश्येन दृश्यरूपेण "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतिप्रसिद्धशक्तिविकारेण च व्याप्यव्यापकानिर्देश्यः व्यष्टिसमष्टिकार्यरूपतया निर्देश्यः स्वयं तु अविकल्पितः स्वरूपतो व्यष्टिसमष्टिकार्यभावेन नैव निरूपितोऽतोऽनिर्देश्यः परिणामित्वस्थूलत्वकृशत्वादि निर्देशानर्ह इत्यर्थः। यतःप्रत्यगात्मा द्रष्टा भोक्ता तत्स्वरूपेण व्यापकतया अनिर्देश्यः दृश्यं भोग्यं देहादि तद्रूपेण च व्याप्यतया निर्देश्य इत्यादि व्याख्यातं तदयुक्तम् प्रत्यगात्माणुत्वप्रतिपादकश्रुतिविरोधात् प्रत्यगात्मनो भोक्तुर्व्यापकत्वे सति उत्क्रान्त्याद्यसंभवप्रसङ्गात् स्वर्गनरकगतसर्वशरीरविषयकसुखदुःखाद्यनुभवप्रसङ्गाच्च ॥ २२ ॥

सर्वेषु जीवेषु स एवोक्तलक्षणः परमेश्वरो वर्त्तते इत्याह— केवलानुभवानन्दस्वरूप इति । केवलो निस्समानातिशयः अनुभवो ज्ञानं स चासावानन्दश्च स्वरूपं यस्य सः गुणाः गुणात्मकः संसारः सृज्यते इति सर्गः कार्यं यस्याः तया अन्तर्हितमावृतमैश्वर्यं ज्ञानं यस्य तस्मिन् जीवे जातावेकवचनं सर्वेषु जीवेषु ईयते "अन्तःप्रविष्टः शास्ता जनानाम्" इति श्रुतेर्ज्ञायते ॥ २३ ॥

यस्मादेवं तस्मादासुरं भावमुन्मुच्य सर्वेषु भूतेषु दयां सौहृदञ्च कुरुतयतदेव तद्भजनं भवतामनुरूपमिति भावः । यथैव अधोक्षजस्तुष्यति ॥ २४ ॥

तस्मिंस्तुष्टे, सर्वं यद्यदिष्टं तदयाचितमेव लब्धं भविष्यति धर्मादिकस्यायत्नलभ्यस्य का कथाऽतिदुर्लभो मोक्षोपि न कामितव्यो निष्कामतया तद्ध्यानमेव कर्त्तव्यमित्युपदिशति, तुष्टे—ेति । तस्मिन् तुष्टे सति किमलभ्यं न किमपीत्यर्थः । एवं सति उपगायतां तद्गुणादिकीर्तननिष्ठानां चरणयोः सारं सौन्दर्यं जुषतां सेवमानानां तच्चरणध्यातॄणां नोऽस्माकं यदा अगुणेन प्राकृतगुणसम्बन्धरहितेन मोक्षेणाप्याकाङ्क्षितेन किं, न किमपि तदा गुणव्यतिकरात् प्रकृतिगुणपरिणामात् स्वसिद्धाः अयत्नलभ्याः अर्थात्संसारे भ्रमता जीवेन यत्र क्वचन लभ्याः एव ये धर्मादयः धर्मार्थकामाः तैराकाङ्क्षितैः किं, न किमपीत्यर्थः हरिदासेन यदि भजनफलभूते मोक्षेपि आकाङ्क्षा न कार्या तर्हि धर्मादिषु कुत इति फलितोऽर्थः ॥ २५ ॥

ननु, वेदोक्तानि कर्मज्ञानाद्यात्मकानि बहूनि श्रेयस्साधनान्यनादृत्य चरणयोः सारं जुषामिति परमपुरुषचरणध्यानमेव कुतो मुख्यं श्रेयस्साधनं मन्यसे इत्यत्र सर्वस्य वेदोक्तसाधनजातस्य परमपुरुषचरणध्यानाङ्गत्वान्न कस्याप्यनादर इत्याह, धर्मार्थेति । परमस्येति अधिकरणस्य शेषत्वविवक्षया षष्ठी परमे पुंसि अंशानि आत्मनोऽंशभूतस्य एषां परमपुरुषस्वरूपगुणचिन्तया नियोजनं प्रति निगमस्यार्थं भूतं यद्देतदखिलं धर्मादिकं श्रेयःसाधनं सत्यं मन्ये इत्यन्वयः । धर्मादीनां समाहारद्वंद्वे पुंस्त्वमार्षम् । धर्मादिरूपस्त्रिवर्गो योऽभिहितो वर्णितः ईक्षा आत्मानात्मपरमात्मस्वरूपगुणादिज्ञानम् त्रयी कर्मविद्या नयदमौ तर्को दण्डनीतिश्च विविधा वार्त्ता जीविकाः तत्र धर्मस्य हृदयशुद्धिद्वारा ज्ञानसाधनत्वं ज्ञानस्य ध्रुवास्मृतिपरभक्तियोगादिपदवाच्यपरध्यानसाधनत्वम्, अन्यस्य सर्वस्य जीवनद्वाराधर्मसाधनत्वमितिदिक् "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इतिसूत्रमत्रानुसन्धेयम् ॥ २६ ॥

यदन्यैर्दुरवापं तदेतज्ज्ञानम् नारदाय अस्मद्गुरवे नरसखो नारायण आह उक्तवान् तदधुना एकान्तिनां मुमुक्षूणां भगवतः पादारविन्दरजसा आप्लुतदेहिनां स्यान्नान्येषाम् ॥ २७ ॥

विज्ञानेनाऽनुभवेन संयुतम् धर्मं धर्मरूपम् भागवतं भगवत्प्राप्तिसाधनम् एतज्ज्ञानं मया नारदाच्छ्रुतम् ॥ २८ ॥

---

### भाषाटीका ।

स्वयं अनिर्देश्य और अविकल्पित जो ईश्वर है वही चेतनाचेतन शरीर वाला होने से व्याप्य और व्यापक पने से निर्देश करने के योग्य है ॥ २२ ॥

वही केवलानुभव और आनन्द स्वरूप वाला होकर भी परमेश्वर है अर्थात् ईश्वरों का भी ईश्वर निरवधिक नियंता है परंच जीवों को मोहादि गुणों की सृष्टि करने वाली माया से अंतर्हित ऐश्वर्य प्रतीत होता है ॥ २३ ॥

हे दैत्य बालकों ! तस्मात् तुम लोग आसुर भाव को छोड़ कर सर्व प्राणियों पर दया करो और सौहृद रखो जिससे हरि प्रसन्न होवै ॥ २४ ॥

सब से आदि में होने वाला और जिसका अंत नहीं ऐसा जब ईश्वर प्रसन्न होजाय तब क्या अलभ्य है तथापि जो प्रारब्ध के आधीन धर्मादिक आपही सिद्ध हैं उन सब से क्या प्रयोजन हैं और चरण रजकी सेवा करने वाले और चरणों के गुण गान करने वाले हम लोगों को मोक्ष से भी क्या प्रयोजन है ॥२५॥

धर्म अर्थ और काम यह कथितजो त्रिवर्ग तथा आत्मविद्या और कर्मविद्या तर्क दण्डनीति और दो प्रकारकी जीविका यह सम्पूर्ण निगमअर्थ, जो परम सुहृद परमात्माको जो आत्मा अर्पण करदेवेतो सर्व सत्य है, नहीतो असत्यही है ॥ २६ ॥

यह निर्मल और दुर्लभज्ञान नरके सखा श्रीमन्नारायणने नारद को दियाऽहा सो यह ज्ञान एकांती और भगवान के चरण कमलकी रजसे स्नान करने वाले अकिञ्चनमहात्माओं को होता है ॥ २७ ॥

मैने यह ज्ञान प्रथम देव दर्शन श्रीनारदजी के मुखसे सुना है और विज्ञान सहित शुद्धभागवत धर्म भी सुना है ॥ २८ ॥

---

दैत्यपुत्रा ऊचुः ।

प्रह्लाद ! त्वं वयं चापि नर्तेऽन्यं विद्महे गुरुम् ।
एताभ्यां गुरुपुत्राभ्यां बालानामपि हीश्वरौ ॥ २९ ॥
बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः ।
छिन्धि नः संशयं सौम्य ! स्याच्चेद्विश्रम्भकारणम् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायाम्
वैयासिक्यां सप्तमस्कन्धे प्रह्लादानुचरिते
षष्ठोऽध्यायः ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्रातिविस्मिताः पृच्छन्ति-प्रह्लादेति । हे प्रह्लाद ! त्वं वयमेताभ्यां शण्डामर्काभ्यामृते ऽन्यं गुरुं न विद्मः एतदागमनात्पूर्वमेवाहं नारदपार्श्वे गत इति चेत्तत्राऽऽहुः, बालानामप्यतिशिशूनामस्माकमेतावीश्वरौ नियन्तारावतस्तवान्यत्र गमनं न सम्भवति ॥ २९ ॥
स एवात्रागत इत्यपि न सम्भवतीत्याहुः—बालस्येति । दुरन्वयो दुर्घटः विश्रम्भकारणं विश्वासहेतुः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र विस्मिताः पृच्छन्ति दैत्यकुमाराः—प्रह्लादेति । हे प्रह्लाद ! त्वं वयञ्चाप्येताभ्यां गुरुपुत्राभ्यामृते विनाऽन्यं गुरुं न विद्महे, एतदागमनात्पूर्वमेवाहं नारदपार्श्वे गत इत्यत्राहुः, बालानामपि शिशूनामपि सतामस्माकमेतावेवेश्वरौ नियन्तारौ अतस्तवान्यत्र गमनं न सम्भवतीति नः शङ्का वर्त्तत इत्यर्थः ॥ २९ ॥
नारद एवात्रागत इति न सम्भवतीत्याहुः—बालस्येति । अन्तःपुरस्थस्य बालस्य तव महतो नारदस्य सङ्गो दुरन्वयो दुर्घटः हे सौम्य, प्रह्लाद ! नोऽस्माकं संशयं छिन्धि अपनुद विश्रम्भकारणं विश्वासहेतुः स्याच्चेत् असम्भावितत्वेनाऽस्माभिरविश्वसनीयो नारदसङ्गमः त्वदुक्तस्तत्र यद्यस्माद्विश्वासहेतुरस्ति चेत्तदुपपादनपूर्वकं तत्सङ्गतिविषयं संशयं छिन्धीत्यर्थः ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एतस्मिन्नवसरे दैत्यपुत्राः प्रह्लादकथितार्थशङ्कया तं पृच्छन्तीत्याह—प्रह्लादेति । एताभ्यां गुरुपुत्राभ्यां शण्डामर्काभ्यामृते नान्यं गुरुं विद्महे यस्मात् किञ्च विज्ञानञ्चेश्वरविषयं विवक्षितं तदुपाधिनापि बालानामक्षराभ्यासनिरतानामस्माकमीश्वरो न कांक्षित इति यस्मात् अन्यगुर्वभावेऽपीश्वर उपदेष्टा स्यादतो वाह, बालानामिति । बालानामीश्वरोऽस्त्यपि किं नास्तिप्रतिपत्त्यभावात् ॥ २९ ॥
कस्मिंश्चिदवसरे देशान्तरेऽन्यगुरुसङ्गतिः किं न स्यादिति तत्राह, बालस्येति । तस्मादुत्पन्नं नः संशयं जहीत्यन्वयः तत्र कस्मादुरित्याह, स्यादिति ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षष्ठोऽध्यायः ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सविस्मयं पृच्छन्ति—प्रह्लादेति । एताभ्यामृतेऽन्यं गुरुं न विद्मः बालानामीश्वराविति त्वयाऽप्येतद्धस्तात् स्वमुन्मोच्य तत्पार्श्वे गन्तुमशक्यमिति भावः ॥ २९ ॥
स एवात्रागत इत्यपि न सम्भवतीत्याहुः, बालस्येति ॥ ३० ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
षष्ठोऽध्यायः सप्तमस्य सङ्गतः सङ्गतः सताम् ॥ ६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे प्रह्लाद ! एताभ्याम् अन्यं ते गुरुं, वदसीति शेषः । वयन्तु न विद्महे न विद्मः एतावेव नो बालानामीश्वरौ गुरू अनयोर्भया-दन्यत्र गमनासम्भवादिति भावः ॥ २९ ॥

नारदेन सह तव समागम इह न सम्भवतीत्याहुः, अन्तःपुरस्थस्य महता नारदेन सह सङ्गमो दुरन्वय इति विस्रंभस्य विश्वासस्य कारणं मूलं स्यादस्ति चेत्तर्हि तद्वर्णनेन संशयं छिन्धि ॥ ३० ॥

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

षष्ठाध्यायार्थप्रकाशः ॥ ६ ॥

---

भाषा टीका ।

दैत्यपुत्रा ऊचुः ।

दैत्यपुत्र बोले, कि—हे प्रह्लाद ! तुम और हम सब भी इन दोनो गुरुपुत्रों को छोड कर तीसरे किसी गुरू को जानते ही नही, क्योंकि ? हम लोगों के छोटी अवस्था से यही लोग शिक्षक हैं ॥ २९ ॥

और भीतर रानिवास में रहने वाले तुमको तौ महत्सङ्ग बहुत ही दुर्लभ है, हे सौम्य ! जो हम लोगों पर विश्वास हो ? तौ यह हमारा संशय दूर करो ॥ ३० ॥

इति श्रीमद्भागवत महापुराण सप्तमस्कन्ध, षष्ठ अध्याय

की भागवताचार्यकृत भाषा टीका

समाप्त ॥ ६ ॥

---

इति श्रीमद्भागवते महापुराणे सप्तमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

—०:*:०—

## ॥ सप्तमोऽध्यायः ॥

नारद उवाच ।

एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः ।
उवाच स्मयमानांस्तान्स्मरन्मदनुभाषितम् ॥ १ ॥

प्रह्लाद उवाच ।

पितरि प्रस्थितेऽस्माकं तपसे मन्दराचलम् ।
युद्धोद्यमं परं चक्रुर्विबुधा दानवान्प्रति ॥ २ ॥
पिपीलिकैरहिरिव दिष्ट्या लोकोपतापनः ।
पापेन पापोऽभक्षीति वादिनो वासवादयः ॥ ३ ॥
तेषामतिबलोद्योगं निशम्यासुरयूथपाः ।
वध्यमानाः सुरैर्भीता दुद्रुवुः सर्वतो दिशम् ॥ ४ ॥
कलत्रपुत्रमित्राप्तान् गृहान् पशुपरिच्छदान् ।
नावेक्षमाणास्त्वरिताः सर्वे प्राणपरीप्सवः ॥ ५ ॥
व्यलुम्पन् राजशिबिरममरा जयकाङ्क्षिणः ।
इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ॥ ६ ॥
नीयमानां भयोद्विग्नां रुदतीं कुररीमिव ।
यदृच्छयागतस्तत्र देवर्षिर्ददृशे पथि ॥ ७ ॥
प्राह नैनां सुरपते ! नेतुमर्हस्यनागसम् ।
मुञ्च मुञ्च महाभाग ! सतीं परपरिग्रहम् ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तमे मातृगर्भस्थे स्वस्मिन्नारदभाषितम् ।
प्रह्लादो वर्णयामास शिष्यप्रत्ययसिद्धये ॥ १ ॥
अश्रावि नारदादेतन्मया गर्भ इतीरितुम् ।
तत्प्रस्तावकथामाह पद्यैः षोडशभिः सुधीः ॥ २ ॥ १ ॥

अस्माकं पितरि हिरण्यकशिपौ स्वकृतेनैव पापेन पापोऽसावभक्षि भक्षित इति हर्षेण वदन्तो युद्धोद्यमं चक्रुः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

राज्ञः शिबिरमावासं व्यलुम्पन् सर्वस्वापहारेण नाशितवन्तः ॥ ६ ॥ ७ ॥

अनागसं निरपराधामेनां नेतुं मार्हसीति प्राह ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दैत्यकुमारैरेवं पृष्टः प्रह्लादस्तत्सङ्गतिहेतुमुपपादयंस्तत्त्वत्रययाथात्म्योपदेशपूर्वकं सपरिकरं भगवद्भक्तियोगमुपदिष्टवानित्याह,

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

भगवान्नारदः—एवमिति । एवम् इत्थं दैत्यसुतैः पृष्टो भागवतोत्तमः प्रह्लादस्तान्दैत्यपुत्रान्प्रति स्मयमानो मया नारदेनानुभाषितं स्मरन्नुवाच ॥ १ ॥

तदेवाह—पितरीत्यादिना, नाऽधुनाप्यजहात्स्मृतिरित्यन्तेन । अस्माकम् पितरि हिरण्यकशिपौ तपसे तपः कर्तुं मन्दराचलंप्रति प्रस्थिते प्रयाते सति इन्द्रादयो विबुधा देवाः दानवान्प्रति युद्धोद्यमं चक्रुः ॥ २ ॥

कथम्भूतास्सन्तः लोकोपतापनः लोकानां दुःखकारी पापः पापात्मा स्वपापेनैव दैवात्पिपीलिकैरहिः सर्प इव असाक्षि भक्षितः इति वादिनो वदन्तः सन्तः वासवः इन्द्रः आदिर्येषां ते युद्धोद्यमं चक्रुरिति पूर्वेणान्वयः ॥ ३ ॥

ततः किं जातम् ? तत्राह—तेषां वासवादीनां बलोद्योगं बलप्रयुक्तयुद्धोद्योगं निशाम्य दृष्ट्वा सुरैर्वध्यमाना अत एव भीताः सन्तो ऽसुरयूथपाः सर्वे त्वरिताः सर्वतो दिशं दुद्रुवुः पलायितवन्तः ॥ ४ ॥

कथम्भूताः कलत्रादीन् नावेक्षमाणास्तेषु त्यक्तस्पृहा इत्यर्थः, तत्र हेतुः, सर्वे प्राणपरीप्सवः प्राणमात्रपरित्राणोत्सुकाः, तत्र परिच्छदा भोगोपकरणानि ॥ ५ ॥

ततो जयशालिनोऽमरा देवाः राज्ञो हिरण्यकशिपोः शिबिरं गृहं व्यलुम्पन् सर्वस्वापहारेण नाशितवन्तः, इन्द्रस्तु राज्ञी हिरण्यकशिपोर्भार्यां मम मातरमग्रहीत् ॥ ६ ॥

तां चेन्द्रेण नीयमानामत एव भयोद्विग्नां कम्पितां कुररीमिव क्रन्दन्तीं रुदतीं देवर्षिर्नारदो यदृच्छयोपगतः पथि ददर्श प्राह च ॥ ७ ॥

तदेवाह—हे सुरपते ! अनागसं निरपराधामिमां नेतुं त्वं नार्हसि अतो हे महाभाग ! परेणाऽन्येन हिरण्यकशिपुना परिगृहीतां परदारानित्यर्थः, मुञ्च मुञ्च ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रुतेषु सत्सु साधनानां भक्त्यैव प्राधान्यं मुक्तेर्मुख्यप्रसादजनकत्वाद्भक्तिरेव पुरुषेणापोद्यत्यादिकं निरूप्यतेऽस्मिन्नध्याये, भक्तिप्रतिपादनात्मकत्वादस्य शास्त्रस्य पुनः पुनस्तत्प्रतिपादनात्पुनरुक्तिशङ्का कार्या तत्र दैत्यपुत्रैः पृष्टः प्रह्लादः किं चकारेति युधिष्ठिरशङ्कान्वितस्तां परिहरन्नारद आह—नारद इति । नारदस्य ममाऽनुभाषितम् ॥ १ ॥ २ ॥

अहिः सर्पः पिपीलिकैर्यथा भक्ष्यते तथा लोकोपतापनः पापो हिरण्यकशिपुः स्वपापेनाऽभक्षि नष्टप्रायोऽभूत् दिष्ट्या सुखमस्तु लोकानामिति श्रुत्याः "दिष्ट्या समुपतोऽस्य" इत्यमरः ॥ ३—५ ॥

व्यलुम्पन् जयकाङ्क्षिणो जितयुद्धाः असुरजयेन प्रकाशमानाः ॥ ६ ॥ ७ ॥

तवोपभोक्तुं योग्या न भवतीत्याह—परपरिग्रहमिति ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सप्तमे नारदात्प्राप यज्ज्ञानं मातृगर्भगः ।
तदेवोपादिशद्बालान् भक्तिं प्रेम च तत्फलम् ॥

॥ १—५ ॥

राज्ञो हिरण्यकशिपोः शिबिरं आवासं व्यलुंपन् सर्वस्वापहारेण नाशितवन्तः ॥ ६—८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तद्विश्वासकारणं सप्तमे वर्ण्यते एवमुक्तरीत्या ॥ १ ॥

तपसे तपःकर्तुं मन्दराचलमस्माकं पितरि हिरण्यकशिपौ प्रस्थिते सति तत्रापि पिपीलिकैर्भक्षिते सति तदा वासवादयः पिपीलिकैरहिरिव लोकोपतापनः पापः पापेन अभक्षि भक्षित इति वदन्तो दानवान् प्रति युद्धोद्यमं चक्रुरिति द्वयोरन्वयः ॥ २ ॥ ३ ॥

अतिबलेन उद्योगं यत्नम् ॥ ४ ॥

नावेक्षमाणाः तत्प्रतीक्षामकुर्वाणाः ॥ ५ ॥

राजशिबिरं राजस्थानम् व्यलुम्पन् सर्वस्वापहारेण शून्यं कृतवन्तः ॥ ६ ॥

यदृच्छया भाग्यवशात् ॥ ७ ॥

परपरिगृहं परदारान् अनागसं नास्त्यागोऽपराधो यस्यास्ताम् एनां नेतुं मार्हसीति प्राह, ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीकान्ताय नमः ।

नारद उवाच ।

नारदजी बोले, कि—इस प्रकार दैत्य पुत्रों ने महा भागवत प्रह्लाद को जब पूछा, तब प्रह्लाद विस्मय को प्राप्त होनेवाले दैत्यपुत्रों के प्रति मेरे भाषण को स्मरण करता हुआ बोला ॥ १ ॥

प्रह्लाद उवाच ।

प्रह्लाद बोला, कि हमारे पिता जब तप के लिये मन्दराचल

इन्द्र उवाच ।

आस्तेऽस्या जठरे वीर्यमविषह्यं सुरद्विषः ।
आस्यतां यावत्प्रसवं मोक्ष्येऽर्थपदवीं गतः ॥ ९ ॥

नारद उवाच ।

अयं निष्किल्बिषः साक्षान्महाभगवतो महान् ।
त्वया न प्राप्स्यते संस्थामनन्तानुचरो बली ॥ १० ॥
इत्युक्तस्तां विहायेन्द्रो देवर्षेर्मानयन्वचः ।
अनन्तप्रियभक्त्यैनां परिक्रम्य दिवं ययौ ॥ ११ ॥
ततो नो मातरमृषिः समानीय निजाश्रमम् ।
आश्वास्येहोष्यतां वत्से ! यावत्ते भर्तुरागमः ॥ १२ ॥
तथेत्यवात्सीद्देवर्षेरन्ति साऽप्यकुतोभया ।
यावद्दैत्यपतिर्घोरात्तपसो न न्यवर्त्तत ॥ १३ ॥
ऋषिं पर्यचरत्तत्र भक्त्या परमया सती ।
अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये ॥ १४ ॥
ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः ।
धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्म्मलम् ॥ १५ ॥
तत्तु कालस्य दीर्घत्वात् स्त्रीत्वान्मातुस्तिरोदधे ।
ऋषिणानुगृहीतं मां नाधुनाऽप्यजहात्स्मृतिः ॥ १६ ॥

भाषा टीका ।

को गये, तब देवताओं ने दानवों के प्रति युद्ध का बडा उद्यम किया ॥ २ ॥

और देवता लोग बोले, कि–भला भया सब लोकों को दुःख देने वाले पापी को उसी के पाप से सर्प के नाईं पिपीलिकाओं ने भक्षण करलिया ॥ ३ ॥

देवताओं की सेना का उद्योग देखकर असुर यूथप लोग भी भयभीत होकर ताडित हुए २ अपने २ स्त्री पुत्र मित्र आप्त लोकों को तथा गृह पशु और उपकरणादि को न देख कर बड़ी जल्दी सब दिशाओं को प्राण लेकर भाग गये ॥४–५॥

जीत की इच्छा वाले देवता लोगों ने भी राजा के निवास स्थान का भङ्ग कर दिया, और इन्द्र ने राजमहिषी मेरी माता को ग्रहण कर लिया ॥ ६ ॥

तब भय से उद्विग्न कुररी ( पक्षिणी ) के तरह रोनेवाली मेरी माता को इन्द्र ले चला, इतने में अकस्मात उस मार्ग में आए हुए नारदजी दिखाई पड़े ॥ ७ ॥

और नारद जी बोले, भी कि–हे सुरपते ! हे महाभाग ! तुम इस बिचारी निरपराधिनी पराई स्त्री को लेजाने के योग्य नहीं हो, इस बिचारी सती को छोडो २ ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अविषह्यं दुःसहम् अतोऽनया प्रसवपर्यन्तमत्रास्यताम् ततश्चार्थस्य पदवीं मार्गं गतः प्राप्तः सन् जातं पुत्रं हत्वा मोक्ष्यामीत्यर्थः ॥ ९ ॥

साक्षात्स्वगुणैरेव महान् तु पित्रादिसम्बन्धात् त्वया हेतुभूतेन संस्थां मृत्युं न यास्यति तत्र हेतवो निष्किल्बिष इत्यादयः ॥ १० ॥

अनन्तस्य प्रियो योऽहं स वा प्रियो यस्य तस्य मम भक्त्या एनां प्रदक्षिणीकृत्य ॥ ११ ॥

इहोष्यतामित्याहेति शेषः ॥ १२ ॥

अन्ति समीपे ॥ १३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्तर्वत्नी गर्भिणी इच्छया भर्त्तुरागमनानन्तरं प्रसूतये एवमपि स्वगर्भस्य क्षेमाय ॥ १४ ॥

तस्याः शोकशान्त्यै धर्मस्य तत्त्वं भक्तिलक्षणम् ज्ञानमात्मानात्मविवेकस्तदुभयं प्रादात् ईश्वरः समर्थः ॥ १५ ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्युक्त आहेन्द्रः-आस्त इति । अस्याः जठरे कुक्षावविषह्यमस्माभिः सोढुमशक्यं सुरद्विषो हिरण्यकशिपोः वीर्यं गर्भरूपेण वर्द्धमानमास्ते तिष्ठत्यतोऽनया प्रसवपर्यन्तमास्यताम् मत्समीपे स्थीयतां ततश्चार्थस्य पदवीं मार्गं गतस्सन् मोक्ष्ये जाते पुत्रे हत्वा एनां त्यजामीत्यर्थः ॥ ९ ॥

एवमुक्तो देवर्षिराह-सोयमिति । सोयं गर्भस्थः शिशुस्त्वया हंत्रा संस्थां मरणं न प्राप्स्यते. तत्र हेतुं वदन् तमिमं विशिनष्टि, निष्किल्बिषः मरणनिमित्तप्राचीनकिल्बिषरहितः, तत्कुतः? महाभागवतः भगवद्भक्त्यैव ध्वस्तकिल्बिष इति भावः । महागुणैः श्रेष्ठः अनन्तस्य भगवतोऽनुचरः बली महाबलसम्पन्नः यद्यपि गर्भस्थदशायां स्वानुग्रहात्पूर्वं न भागवतत्वादयो धर्मास्तथापि समनन्तरमेव स्वेनानुग्रहीष्यमाणस्य पुनर्जन्मकाले "जायमानं हि पुरुषं यं पश्येत्" इत्युक्तरीत्या भगवतेक्षिष्यमाणस्य उक्तधर्मान्वय इत्यभिप्रायेण निष्किल्बिष इत्यादीनि विशेषणान्युक्तानि । ननु, इन्द्रेण मुक्तांप्रति स्वोपदेशे सति तद्गर्भस्थस्योक्तधर्मसम्पत्तिः तस्य तद्धर्मसम्पत्तौ हि तद्धेतुकस्तत्त्याग इतीतरेतराश्रयत्वमिति कथं देवर्षिणैवमुक्तमिति चेन्मैवं गर्भस्थं नितरामीश्वरकटाक्षविषयमत एव——

> "ईश्वरस्य च सौहार्दं यदृच्छा सुकृतं तथा ।
> विष्णोः कटाक्ष अद्वेष आनुकूल्यं च सात्विकैः ॥
> संभाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः" ।

इत्युक्तहेतुषट्कसम्पन्नं दैवज्ञो देवर्षिरालक्ष्य त्वयैतस्यामनुच्यमानायामप्यहमुक्तधर्मयुक्तं नूनं करवाययतोऽयं त्वया संस्थां न प्राप्स्यतीत्युक्तवानिति नेतरेतराश्रयः ॥ १० ॥

इतीत्थमुक्त इन्द्रो देवर्षेर्नारदस्य वचो मानयन् गौरवादभ्युपगच्छन् तां राजमहिषीं विहाय अनन्तस्य भगवतः प्रियो योऽहं तस्य मम भक्त्या एतां मन्मातरं परिक्रम्य प्रदक्षिणीकृत्य दिवं प्रति ययौ ॥ ११ ॥

ततः ऋषिर्नारदः मम मातरं स्वाश्रमंप्रति समानीय सम्यगनाश्वासेन उन्नीय गमयित्वा आश्वास्य सान्त्वयित्वा हे वत्से, बाले ! तव भर्त्तुर्यावदागमः तावत्पर्यन्तं त्वया इहास्मिन्मदाश्रमे उष्यतां स्थीयतामित्युवाचेति शेषः ॥ १२ ॥

तत्तस्तथेत्यङ्गीकृत्य सा मन्माता देवर्षेरन्तिके समीपे नास्ति कुतोऽपि भयं यस्यास्तादृशी अवात्सीदुषितवती ॥ दैत्यपतिरुग्रात्तपसो यावन्नन्यवर्त्तत तावत्सती मन्माता अन्तर्वत्नी गर्भिणी स्वगर्भस्य क्षेमाय रक्षणायेच्छया स्वभर्त्तुरागमनानन्तरं प्रसूतये च परमया भक्त्या ऋषिं नारदं पर्यचरत् शुश्रूषितवती ॥ १३ ॥ १४ ॥

ततस्तां देवर्षिरनुजग्राहेत्याह-ऋषिरिति । ईश्वरः समर्थ ऋषिः तस्याः परिचरन्त्याः मन्मातुर्मामप्युद्दिश्य निर्मलं धर्मस्य तत्त्वं ज्ञानञ्चेत्युभयं प्रादात् धर्मो भगवद्भक्तियोगलक्षणः तस्य तत्त्वं याथात्म्यं तदङ्गभूतं ज्ञानं देहाविविक्तप्रत्यगात्मयाथात्म्यज्ञानं च प्रादात् उपदिष्टवान् इत्यर्थः ॥ १५ ॥

तद्दशायामुपदिष्टं तदुभयं मम मातुः स्त्रीत्वात् कालस्य दीर्घत्वाच्च तिरोदधे, विस्मृतमभूदित्यर्थः । ऋषिणा भगवता नारदेनाऽनुगृहीतं मां तु सा स्मृतिस्तदुपदेशजनितं स्मृत्यात्मकं ज्ञानमधुनापि नाजहात् न तत्याज ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सुरद्विषो हिरण्यकशिपोर्वीर्यं रेतोलक्षणम् अस्या यावत्प्रसवः तावन्मम वशे आस्यतां पश्चादहं मोक्ष्ये ततःपूर्वं कस्मान्मुञ्चसीति तत्राह, अर्थपदवीमिति ॥ ९ ॥

अनया प्रसूतः पुत्रो हन्तुं त्वया न शक्यत इत्याह, न त्वयेति । संस्थां मरणं कुतोऽत्राह, अनन्तेति ॥ १० ॥

अनन्तप्रियः श्रीनारायणो अस्य भक्त्या अनन्तस्य हरेः प्रिया बहुमानलक्षणा भक्तिरनन्तप्रिया भक्तिस्तया वा ॥ ११ ॥

तावदत्रोष्यतामित्याह—यावदिति ॥ १२ ॥

अन्त्यान्तिके ॥ १३ ॥

अन्तर्वत्नी गर्भिणी ॥ १४ ॥

गर्भक्षेममिच्छाप्रसवञ्चेत्युभयम्. ईश्वरो वरप्रदानसमर्थः नारदाच्छ्रुतमित्यनेन नारदस्य यद्गुरुत्वमभिप्रेतमेवं विधमित्याह-धर्मस्येति । धर्मस्य हरेर्भागवतसंज्ञस्य वा तत्त्वं तदुभयविधज्ञानं च यद्गर्भस्थं मामुद्दिश्य मात्रे उपदिष्टम् ॥ १५ ॥

तदुभयं तयोः कालस्यातिक्रान्तत्वात् स्त्रीत्वात् शब्दादिविषयलौल्याच्च मातुस्तिरोहितमभूदित्यन्वयः "अणुरेषधर्मः" इति श्रुतिः । धर्मो हरिस्ततस्तव किमभूदिति तत्राह, ऋषिणेति ॥ १६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अनन्तानुचर इति । तस्य पूर्वत एव भक्तिसंस्कारो दर्शितः ॥ १०—१४ ॥

ऋषिरिति । शोकमात्रशान्त्यै धर्मस्य तत्त्वं साधारणस्वरूपज्ञानञ्चात्मविषयं प्रादात् तत्रैव मामप्युद्दिश्य निर्मलं यद्धर्मस्यैतस्य तत्त्वं भागवताख्यम् "न शोभते ज्ञानमलं निरञ्जनम्" इति न्यायेन ज्ञानञ्च यत्तदाख्यं तत् प्रादात् तत्कथने तत्तदपि प्रतिपादितवान् । किन्तु सा गृहीतुं न शशाकेति भावः ॥ १५ ॥

भवतामपि भूयान्मे यदि श्रद्दधते वचः ।
वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा ॥ १७ ॥
जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः ।
फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्त्विति तदपीत्यर्थः । तेनैव स्वमातरि श्रीनारदस्य सम्यगनुग्रहो नाभूदिति व्यञ्जितम् ॥ १६—१७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आस्यतां मत्कारागार एव प्रसवपर्यंतमनया स्थीयतां मर्य्यपदवीं स्वार्थमार्गे गतः प्राप्तस्सन् मोक्ष्ये जातं पुत्रं हत्वा इमां मोक्ष्यामीत्यर्थः ॥ ९ ॥

त्वया हेतुभूतेन संस्थां मृत्युम् ॥ १० ॥

अनन्तप्रिये मयि या भक्तिस्तया हेतुना परिक्रम्य एतद्गर्भस्थाय हरिभक्ताय नम इति प्रणम्य च ॥ ११ ॥ १२ ॥

अन्ति अन्तिके ॥ १३ ॥

भर्त्तुरागमनानन्तरमेव या इच्छया प्रसूतिस्तस्यै ॥ १४ ॥

उभयं गर्भक्षेमं स्वेच्छाप्रसवं च निर्मलमिति विशेषणात् धर्मस्य तत्त्वं भक्तियोगं भागवतसम्मतं ज्ञानञ्च मामपीत्यपिकारेण मन्मातरमपि ॥ १५ ॥

तर्हि मातुस्ते भक्तिः कथं न दृश्यत इत्यत आह–तत्त्विति । तत्रापि बालत्वात् कालदैर्घ्याच्च कथं न तिरोदधे तत्राह, ऋषिणेति । तेन मन्मातुस्तत्वनुगृहीतत्वाभावात् स्त्रीत्वकालदैर्घ्ये तत्र प्राभूतामिति भावः ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुरद्विषो हिरण्यकशिपोः । अविषह्यं दुस्सहं वीर्यमस्याः जठरे आस्ते गतः अनया यावत्प्रसवमास्यतां ततश्चार्थपदवीं गतस्तमविषह्यं हत्वा एनां मोक्ष्ये ॥ ९ ॥

यतोऽयमनन्तानुचरः अतो महान्बली साक्षान्महाभागवतः अतस्त्वया संस्थां न प्राप्स्यते ॥ १० ॥

अनन्तप्रियस्य मम भक्त्या एनां परिक्रम्य तां तथाभूतां सत्कृतां विहाय ययौ ॥ ११ ॥

इहास्मिन् आश्रमे स्वयोष्वतां स्थीयताम् ॥ १२ ॥

नास्ति कुतोपि भयं यस्याः सा अन्ति निकटे ॥ १३ ॥

इच्छया स्वच्छन्देन प्रसूतय तथापि गर्भस्य क्षेमाय ॥ १४ ॥

धर्मस्य हरिभक्तेस्तत्त्वं याथात्म्यं तत्साधनं हरिज्ञानञ्चेत्युभयं मामप्युद्दिश्य तस्याः प्रादात् ॥ १५ ॥

तत्तु तदुभयं तिरोदधे सूक्ष्मतां जातम् ॥ १६ ॥

---

भाषा टीका ।

इन्द्र उवाच ॥

इन्द्र बोला, कि—इसके जठर मे सुरद्वेषी हिरण्यकशिपु का असह्य वीर्य है, इस लिये जब तक इसके संतान पैदा होगी तब तक रहने दीजिये पीछै उत्पन्न हुए पुत्र को मार कर इसे छोड दूंगा ॥ ९ ॥

नारद उवाच ॥

नारदजी बोले, कि—इसके गर्भ में जो बालक है वह निष्पाप है और साक्षात् महा भागवत है वह तेरे से नहीं मरेगा, क्योंकि ? वह अनंत भगवान् का अनुचर है और बली है ॥ १० ॥

ऐसे जब कहा तब देवर्षि का वाक्य मान कर मेरी मा को छोडकर, मुझे अनंत प्रियजान मेरी भक्ति से माता की परिक्रमा कर स्वर्ग को चला गया ॥ ११ ॥

तत्पश्चात् ऋषि मेरी माता को अपने आश्रम में लाकर आश्वासन कर बोले, कि—हे वत्से ! जबतक तुमारा पति न आवे तब तक यहां निवास करो ॥ १२ ॥

ठीकहै, ऐसा कहकर मेरी माताभी जबतक दैत्यपति घोरतप से नहीं निवृत्त हुआ तबतक ऋषिके आश्रममें निर्भय होकर रही ॥ १३ ॥

उस आश्रम में गर्भवती सती मेरी माता अपने भर्त्ता के आगमन के अनंतर प्रसव की इच्छा से ऋषि की परिचर्या करने लगी ॥ १४ ॥

परम दयालु समर्थ ऋषि श्रीनारदजी ने उसकी शोक शांति के लिये मेरे उद्देश्य करके भक्ति और ज्ञान दोनों दिये ॥ १५ ॥

बहुत कालहोने से वह स्त्री के कारण मेरी माता को भूलगया ऋषि के अनुग्रह से मुझ को अबपर्यंत भी नहीं भूला ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भूयाद्भवेत् वैशारदी स्वार्थे तद्धितः देहाद्यहङ्कारच्छेदिनी पुमानित्यर्थः ॥ १७ ॥

